# शिववैभवम्

## ( संस्कृत–नाट्यप्रबन्धः )

The author acknowledges his indebtedness to the University of Poona for the grant-in-aid of Rs. 150 received by him from the University towards the cost of publication of this book.

ग्रंथकर्ता

प्रा. वि. पां. बोकील, एम्.ए.एस्.टी.सी.डी.

सेवानिवृत्त एज्युकेशनल इन्स्पेक्टर

प्रोफेसर ऑफ एज्युकेशन, पुणें.

मूल्यम्–रूपकत्रयम्

१०.६५

# Shiva-Vaibhavam

The life of Shivaji the great is very eventful. He was endowed with exceptional powers–both physical and intellectual, on the strength of which he won the hearts of thousands of people and founded the Maratha Kingdom . Several historians have compared him with Caesar and Napoleon and Alexander; but Shivaji was really superior to each of them, because he created a kingdom where nothing existed. In addition to unparalleled valour and uncommon intelligence he displayed extraodinary righteousness on many an occasion.

I have selected five conspicuons incidents from Shivaji's life and have tried to weave them into this brief play. I have carefully avoided his encounters with Muslim generals; still, passing references to the then social make–up have had to be included to give a realistic touch to the picure. These occurrences in the five acts of this play are not in the exact chronological order; and the supernatural experiences or romantic happenings or ministerial tests based on Kautilya's Arthashastra are all imaginary(though probable in all respects) and are expected to make a dramatic effect on the readers and spectators.

1208 Sadashiv
Poona City
27th September
1965

V. P. Bokil
Author

# ॥ शिववैभवम् ॥

## नान्दी

यत्तत्त्वं निर्विकारं सकलसुखमयं शान्तिचैतन्ययुक्तं
यच्चाप्युक्तं निरन्तं प्रभवविरहितं सर्वसाक्षित्वपूर्णम् ।
यद्वा नित्यावकाशं प्रकृतिमृगजलाकीर्णभासावलिप्तं
तत्सर्वत्रावलोकं श्रुतिनुतिविषयं ब्रह्म विख्यापयामः ॥ १ ॥

ब्रह्मानन्दसुगन्धसंस्कृततनुं ज्ञानामृताभासुरं
द्वन्द्वातीतमतिं शुभाश्रितगतिं सत्यात्मधारारतिम् ।
संसारार्थनिवृत्तचित्तचतुरं मायाविमोहावशं
भावार्ताः प्रणमाम आनतिगुणा धीगोचरं सद्गुरुम् ॥ २ ॥

( नान्द्यन्ते प्रविशति सूत्रधारः )

सूत्रधारः—एतादृशपरमेशस्तवनेन चैतन्यमुत्पद्येत जनमनसि । प्रादुर्भूयाच्च लोकाग्रणीर्विक्रमशीलः । यवनैराक्रान्तोऽयं जनपदः—उत्सादिता देवालयाः—विनाशितानि तीर्थस्थलानि—निहताः समाजनेतारः—विलुंठिता धननिधयः—अपहृता बालाबलाः। अस्मात्संकटादस्मान्परित्रातुं परमेशावतार एव समर्थः। हृतबलाः स्मः क्रूरकर्मणां तद्दीर्घकूर्चाणां दारुणदर्शनानां परधर्मद्रोहिणां म्लेंछराक्षसानां पुरतः । भोः परमेश्वर, त्वमेव शरण्यः—त्वमेव शरण्यः—त्वमेव शरण्यः—

( ततः प्रविशति सोत्साहा नटी )

नटी—आर्यपुत्र, किमिति प्रमुक्तकण्ठमाक्रन्द्यते भवता ।

सूत्रधारः—प्रिये, किं न श्रुतं त्वया यद्ग्रामसेवको भृशं ताडितः – तस्य द्रव्यराशिश्चोरितः—स्त्रियश्च बलादपनीता यवनदानवै रात्रौ ।

नटी—श्रुतं चावगतं च सर्वम् । ततः परं यत्संवृत्तं तदपि ज्ञातं मया ।

सूत्रधारः—( सजिज्ञासम् ) किं तत् ।

नटी—ते लुंठका म्लेंछराक्षसा गोपुरे शिवरायसैनिकै रूपाभिग्राहिता निहताश्च ।

सूत्रधारः—हन्त भोः । दिष्टया विजयते शिवरायः । कच्चिद् ग्रामसेवकस्य धनराशिः स्त्रीजनश्च मोचितः स्तेनहस्तेभ्यः ।

नटी—अथ किम्-अथ किम् ।

सूत्रधारः—( सानन्दम् ) हन्त भोः । अनुगृहीताः स्मः । प्रशस्यः परमेशः । तथाहि ।

प्रचोदितास्ते तरुणा रणाग्रे
स्वबान्धवानां परिरक्षणार्थम्
दुरात्मनो दण्डयितुं कठोरं
स्वभक्तरक्षाव्रत एव देवः ॥ ३ ॥

नटी—अन्यच्च, शिवरायप्रतिनिधिना ग्रामरक्षका नियुक्ताः—तेभ्यः शस्त्रास्त्राणि प्रदत्तानि–तेषां योगक्षेमश्च सुघटितः । अतोऽहं ब्रवीमि वीतचिन्तेन भवता भाव्यम् । यतः किल—

विश्वासप्रतिपन्नपौरतरुणा विन्यासबोधान्विताः
शस्त्राभ्यासरता बलानुभजका धर्मानुसारात्मकाः ।
साध्वाचारपराः स्वदेशहितकृल्लक्ष्येऽपि बद्धादरा
इत्येषा घटना भवेज्जनपदे लाभाय लोकाश्रिका ॥ ४ ॥

सूत्रधारः—प्रिये, महान् खलु मे प्रमोदः श्रवणेनैतत्संविधानस्य । जातप्रत्यया यद्यस्मद्युवानस्तर्हि समुच्छ्रितो राष्ट्रध्वजः–साधितो लोकोत्कर्षः–संरक्षितोऽस्मद्धर्मः । उक्तं च—

चैतन्यमस्ति जगतो निजमूलनाद्यं
तच्चापि भाति मनुजव्यवसाययोगे ।
प्रज्वल्यते यदि हि तज्जनसंघकार्ये
कल्याणमेव भवतीह दुरात्मनाशात् ॥ ५ ॥

नटी—( सोल्लासम् ) अन्योऽपि श्रेयान्कथनीयोऽस्ति वृत्तान्तः ।

सूत्रधारः—हन्त भोः । ईश्वरप्रसादोऽपि ?

नटी—बाढम् । वीरपुरुषाणां सङ्गमो जातः सिद्धजनैः सह । तेन च महती समाजोन्नतिः सुलभसाध्या भवेत् । श्रूयताम्—

मिष्टान्नं स्याद् घृतमधुयुतं स्वादसत्त्वप्रदानं
क्षेत्रे रोहेद् बहुलफलदं सारतोयेन शस्यम् ।
भूषायोगे विलसति मणिः कांचनेनातिमात्रं
ब्राह्मं क्षात्रं परिणमति वै राष्ट्रकार्ये सहार्थम् ॥ ६ ॥

सूत्रधारः—(भुजावुद्यम्य) शतशः प्रणामः क्षात्रब्राह्मसंयोगाय। स च शाश्वतो भूयादित्येव मत्प्रार्थना। तथाहि—

जलबिन्दुनिपातेन भिद्यतेऽपि शिलोच्चयः।
संततेन प्रदीर्घेण पूर्यते च जलाशयः ॥७॥
अभ्यासेन चिरेणैवं साध्यते बलसंचयः।
"उद्धरेदात्मनाऽऽत्मानं" प्रोक्तं च पूर्वसूरिभिः ॥८॥

नटी—एतत्प्रस्तावमुद्दिश्य "शिववैभवम्" इत्येतन्नामको नाट्यप्रबन्धोऽधुना प्रयोक्ष्यते। तत्कर्मणि विधिवशमस्मत्साहाय्यम्।

सूत्रधारः—(सोत्साहम्) कोऽत्र सन्देहः। सर्वथा सिद्धोऽहं नटगणनियोगमनुष्ठातुम्।

नटी—(पार्श्वतो विलोक्य) अम्मो, अत्रैवायान्ति शिवसैनिकाः स्वामिशासनसंपादनार्थम्। तत्साधयाव इतः।

सूत्रधारः—ओम्। ज्ञास्यावश्च तेषां कार्यरूपम्। श्रूयताम्—

दैवानुकूल्येन हितावहार्यो
लोकावलोको व्यवहारयोगः।
काले वसन्तागमनेऽनुकूला
वायुश्च भानुश्च वसुन्धरा च ॥९॥

(निष्क्रान्तौ। समाप्तो विष्कंभकः)



# प्रथमोऽङ्कः

## प्रथमः प्रवेशः

[ देहूग्रामे तुकारामगृहमन्विष्यन्ति शिवसैनिकाः । ]

प्र० सैनिकः—भो ग्रामवासिनः, कुत्र निवसति महाभागवतस्तुकारामः ।

(तं दृष्ट्वा पलायन्ते सुदूरं ग्रामवासिनः)

द्वि० सैनिकः—किमिति पलायन्ते जनाः अस्मद्दर्शनेन । न कोऽपि शृणोत्यस्मच्छब्दम् ।

(केचिद्बाला दूरतोऽपि भीतभीता धावन्ति)

प्र० सैनिकः—नाहं व्याघ्रो न चापि राक्षसः ।

द्वि० सैनिकः—(सस्मितम्) स्वगतमेतत्त्वन्मतम् । न जाने किं मन्यन्त इतरे जनाः ।

(ततः प्रविशति ग्रामसेवकः)

प्र० सैनिकः—भद्र, नमस्ते ।

ग्रामसेवकः—राजपुरुष, नमस्ते । किं मृग्यतेऽस्मिन्ग्रामे । कुत आयातौ भवन्तौ ।

प्र० सैनिकः—श्रीशिवभूपशासनादिहागतौ विठ्ठलभक्तं तुकारामं द्रष्टुम् । किं तद्गृहम् ।

ग्रामसेवकः—इत इत आगम्यताम् ।

(सर्वे परिक्रामन्ति) इदं तुकारामसदनम् ।

सैनिकौ—एवम् । (देहलीपुरतो नतमस्तकौ तिष्ठतः)

भजे भागवतं भक्त्या तुकारामं नरोत्तमम् ।
देहूग्रामध्वजं पुण्यं शिवभूपनमस्कृतम् ॥१॥

(ग्रामसेवको विस्मितो भवति । तुकारामपत्नी जिजादेवी च भयाक्रान्ताऽऽकृश्य गृहद्वारं पिदधाति ।)

सैनिकौ—(साश्चर्यम्) किमिति संत्रस्ताः कुटुंबिनः ।

ग्रामसेवकः—तुकापत्नी प्रायश्चिन्तयति यद्राजबन्धनं संप्राप्तम् ।

प्र० सैनिकः—भद्र, शिवभूपार्पितमिदं प्रीतिदानं संक्रामितुकामा आवाम् । कृपया सान्त्वयितुमर्हसि ताम् । स विठ्ठलभक्तोऽपि शब्दाप्यताम् ।

ग्रामसेवकः—एवं करोमि । ततश्च लब्धव्यं मयाऽपि किंचित् । (सस्पृहमवलोकयति तन्मुखं निष्क्रामति च गृहपृष्ठतः)

द्वि० सैनिकः—अयमपि प्रीतिदानमपेक्षते ।

प्र० सैनिकः—स्वाभाविकीयं मनोवृत्तिः । शिवदर्शनात्प्राग् नन्दिनं नमस्कुर्वन्ति जनाः ।

द्वि० सैनिकः—(सस्मितम्) बाढम् । अस्मै नन्दिने दास्यावो हरिततृणम् ।

प्र० सैनिकः—रे वैहासिक, न तुष्येत्स हरिततृणेन । प्रायः सुवर्णनाणकाय स्पृहयति ।

द्वि० सैनिकः—तर्हि तस्मै ददाम्यर्धचन्द्रम् ।

प्र० सैनिकः—मा, मैवम् । अपि विस्मृतं त्वया—

आज्ञा हि राज्ञोऽखिलसेवकेभ्यो
व्याहारकार्यं मधुरं प्रजानाम् ।
पीडा भवेन्नापि सुसंस्कृतानां
सूत्रं सुरक्ष्यं शिवभूपसेव्यम् ॥ २ ॥

द्वि० सैनिकः—(सविनयम्) सम्यक् स्मारितोऽस्मि स्वकर्तव्यम् । अनुगृहीतोऽहं भवता ।

(चिन्ताक्रान्ता जिजादेवी गृहद्वारं विवृणोति । बहिरायाति च भयाक्रान्ता बालकाभ्यां ग्रामसेवकेन चानुगता)

जिजादेवी—(सदैन्यम् साञ्जलिबन्धं च) क्षम्यतां क्षम्यताम् । भो राजपुरुषौ, न कोऽप्यपराधः कृतो मया वाऽऽर्यपुत्रेण वा ।

प्र० सैनिकः—( सादरं सानुग्रहं च ) स्वामिनि, अलमुद्वेगेन । न रुष्टः शिवभूपो भवद्भ्यः परं सन्तुष्टः । नापराधो भवतां किन्तु महापुण्योदयः । (जिजादेवी बालकौ च वीतचिन्ताः प्रसन्नचित्ताश्च जायन्ते) भाग्यवति, कुत्र वर्तते युष्मत्-स्वामी विठ्ठलभक्तस्तुकारामः । (जिजादेवी भवति लज्जान्विता बालिकां च सूचयति प्रत्युत्तरं दातुम्)

जिजादेवी—गङ्गे, त्वं कथय । (बालिकां हस्तेन स्पृशति)

गङ्गा—(ससंभ्रमम्) तातः—तातः—नास्ति गृहे ।

प्र० सैनिकः—अधुना कुत्रास्ति त्वत्तातः ।

महादेवः—(निर्भयम्) तिष्ठति स भंडारगिरौ भजनमग्नः ।

प्र० सैनिकः—(साञ्जलिबन्धम्) स्वामिनि, शिवनृपेण प्रदत्तोऽयमुपहारो भवद्भ्यः । ( पुरतः स्थापयति महावस्त्रालङ्कारान् मधुफलमोदकांश्च । तान्दृष्ट्वा विस्मिता भवन्ति जिजादेवी बालकौ च । आनन्दातिशयेन ते परस्परमुखान्यवलोकयन्ति । )

प्र० सैनिकः—अलमाशंकया—

श्रुत्वा यशः परमभागवतस्य पुण्यं
प्रीतो नृपो विनयवान्गुणवान्नयज्ञः ।
प्रीत्या प्रयच्छति धनं भवतां पुरस्ताद्
आदीयतां विमलमानसयोगतस्तद् ॥ ३

(ततो जिजादेवी गृह्णाति महावस्त्रालङ्कारान् । ददाति च बालकाभ्याम्)

जिजादेवी—(सहर्षम्) अम्मो, महार्हं क्षौममिदम् ।

गङ्गा—हन्त भोः । मत्प्रीतये भवति वस्त्राञ्चलोऽयम् ।

महादेवः—(सानन्दमुत्प्लुत्य) महान्खलु मे प्रमोदोऽनेन कञ्चुकेन ।

(सर्वे वस्त्रालङ्कारान् परिदधते । नितान्तं हृष्टा जिजादेवी । बालकौ नृत्यतः सोल्लासम् )

प्र० सैनिकः—भगवति, इमानि फलानि चैतान्मोदकांश्च भक्षयन्तु सर्वे ।

(सर्वे फलानि मोदकांश्च सुखेन भक्षयन्ति।)

(तदा वीणानादः श्रूयते । करतालझंकारश्च । )

महादेवः—(सोत्साहम्) आगतस्तातः––आगतस्तातः ।

(सर्वे सकुतूहलं पश्यन्ति तन्मार्गेण । जिजादेवी तिष्ठति सहर्षलज्जम् । ततः प्रविशति विठ्ठलभक्तस्तुकारामो वीणाहस्तः । सैनिकौ तस्य पादयोः पततः ।)

तुकारामः—भद्रौ, श्रीकृष्णकृपाऽस्तु युवयोः । कुत आगमनम् ।

प्र० सैनिकः—भगवन्, श्रीशिवभूपादेशेन पुण्यपत्तनादायातौ भवद्दर्शनार्थम् ।

तुकारामः—मद्दर्शनाद् श्रीविठ्ठलदर्शनं श्रेयः ।
समीपमेव तत्र वर्तते श्रीविठ्ठलमन्दिरम् ।

प्र० सैनिकः—शिवभूपेन महावस्त्रालंकारा मधुमोदकाश्च प्रेषिता भवदर्थमुपहाररूपेण ।

तुकारामः—( सचिन्तम् ) हा कष्टम् । ( विचिन्त्य ) भो राजपुरुषौ, क्षम्यतां स्पष्टोक्तिः—

सहस्राक्षः साक्षी सुरवरविभुः सिद्धिसुखदः
पुराणः पुण्यात्मा परमकरुणापूर्णहृदयः ।
सदा योगक्षेमं वहति तदुपासकमनसां
न चास्माभिर्ग्राह्यं तदितरवितीर्णं विभवकम् ॥ ४ ॥

( शिवसैनिकौ साञ्जली सदैन्यौ च तिष्ठतः । )

(जिजादेवी चिन्ताक्रान्ता च ।)

प्र० सैनिकः—भो महाभागवत, शिवभूपविज्ञप्तिरियं यदत्रभवता स्वीकरणीयं सर्वमेतत् । सुवर्णनाणकशतमपि पुटकेऽस्मिन्समर्पितम् ।

( तुकारामचरणयोः पुटकं स्थापयति )

तुकारामः—मा मैवम् । न स्वीकरणीयं किमप्येतस्मात् । ( जिजादेवीं बालकौ च प्रति सनिश्चयम् ) निर्यात्यन्तां सर्वे ते वस्त्रालंकाराः ।
( तेन खिन्नवदना भवन्ति ते सर्वे । परं न किमपि वदन्ति । बालकौ रोदनपरौ नूतनवस्त्राणि क्षिपतो भूमौ । रुषानिराशाभ्यामाक्रान्ता च जिजादेवी तथैव करोति । इतरे जना विस्मिता जायन्ते )

सैनिकौ—भगवन्, किं कार्यमावाभ्यामस्मिन्नवसरे ।

तुकारामः—भद्रौ, वाच्यो युवाभ्यां मद्वचनात्स राजा—

निरपेक्षोऽहं राजन् विठ्ठलभक्तो मुमुक्षुरेवाहो ।
उपहारो भवदीयो निर्वर्तितो माऽस्तु खिन्नता चित्ते ॥ ५ ॥

प्र०सैनिकः—भगवन्, किं कार्यमेतैर्वस्त्रालंकारैः फलमोदकैश्च ।

तुकारामः—फलमोदकास्तावद्दातव्या दीनेभ्यः । भूपादेशश्च ग्राह्यो वस्त्रालंकारानुद्दिश्य । (फलमोदका दीयन्ते दीनेभ्यः । जिजादेवी तद्बालकौ च सदुःखं दूरे तिष्ठन्ति ।)

प्र०सैनिकः—भगवन्, शिवनृपोऽत्रभवन्तं द्रष्टुमिच्छति । कदाऽऽगन्तव्यं तेन कुत्र च भवद्दर्शनं भवेत्तस्य ।

तुकारामः—(साञ्जलिबन्धम्) विज्ञाप्यतां शिवभूपो यत्र किमपि प्रयोजनं मद्दर्शनेन । यत्र कुत्रापि भ्रमामि दिने दिने । वृथाऽऽयासो भवेद्राज्ञो यात्रया । तथाहि—

संसारकार्येषु निरीहवृत्त-
र्लाभो न कोऽपि प्रभुणाऽस्ति लभ्यः ।
राज्याङ्गभूतं करणीयमाद्यं
संसिद्धिमाप्नोति निजानुकार्यात् ॥ ६ ॥

सैनिकौ—(स्वभारं गृहीत्वा) भो महाभागवत, साधयावोऽधुना नृपान्तिकम् ।

तुकारामः—ग्रामदैवतविठ्ठलस्य दर्शनं कृत्वा गम्यतां निजमार्गेण । उक्तं च—

उद्योगिनं पुरुषसिंहमुपैति सिद्धि-
र्दैवेन देयमिति दुर्मतयो वदन्ति ।
दैवं निरस्य कुरु पौरुषमात्मशक्त्या
नारायणं च भज भावनिवेशभक्त्या ॥ ७ ॥

( समाप्तः प्रथमः प्रवेशः )



## द्वितीयः प्रवेशः

[ विठ्ठलमंदिरे तुकारामः केचिद् ग्रामवासिनश्च ]

ग्रामवासी—( तुकारामपादयोः पतित्वा ) भो विठ्ठलभक्त, मयि कृपादृष्टिं कुरु ।

तुकारामः—भद्र, किमिष्यते भवता ।

ग्रामवासी—न्यायालये वर्तते व्यवहारपदमेकम् । तस्मिन्मे सिद्धार्थो भूयादिति भवदाशीर्वचनमपेक्षे ।

तुकारामः—किं न प्रार्थ्यते भगवान् विठ्ठलस्तदर्थे । न ज्ञातपूर्वं किं भवता-

मूकं चापि करोति वाग्गुणयुतं वाणीप्रसूतिः स्वयं
पङ्गुं लंघयते गिरिं बलवशात्सामर्थ्यहेतुः प्रभुः ।
विश्वं वर्तयते स्वकीयविभवाद् विष्णुर्विशुद्धात्मवान्
वैकुंठं नतमस्तको भज सखे सत्याश्रयं प्राणिनाम् ॥ ८ ॥

ग्रामवासी—आम् । अनुगृहीतोऽस्मि । भजामि भगवन्तं विठ्ठलं भवदुपदेशात् । दयालो, भवतोऽपि शुभाशिषमाशंसे ।

तुकारामः—भवतु । त्वदर्थं प्रार्थये भगवन्तम् ।

ग्रामवासी—उपकृतोऽस्मि । (निष्क्रान्तः)

तुकारामः—भो भगवन्, मायाजालबद्धा इमेऽज्ञजना न जानन्ति त्वत्स्वरूपं निजसुखं च तत्त्वतः । तेन च दुःखपङ्के विलुठन्ति । अतोऽहं ब्रवीमि-

मायां प्रभो संहर संहरस्व
मुक्ता भवेयुर्मनुवंशजा वै ।
दुःखस्य नाशः सुखसंपदर्थो
भूयात्सदा भाविकमानवानाम् ॥ ९ ॥

वृद्धा स्त्री—भो दयालो, मत्पुत्रो सुदीर्घकालं व्याधिग्रस्तो वर्तते। स निरामयो भवतु भवत्कृपया—इति मे विज्ञप्तिः।

तुकारामः—(साञ्जलिबन्धम्) अम्ब, यत्सत्यं न जाने शारीरशास्त्रं वा भेषजविज्ञानं वा।" अखिलभवरोगनाशकं श्रीविठ्ठलं भजेयुः सर्वे"—एनामेवैकां सुखोपचर्यां जानामि। तदेव कथयामि तुभ्यम्।

वृद्धा स्त्री—भाव, आगच्छ मद्गृहं कृपादृष्टिं च कुरु मत्पुत्रे।

तुकारामः—अयि मातर्, श्रीविठ्ठलप्रतिमा विद्यते त्वद्गृहे। स एव भिषग्वरः। तं प्रार्थयस्वानन्यमनसा। उक्तं च—

बहुला व्याधयः सन्ति भयस्थानानि वै शतम्।
शोकबीजसहस्राणि हरिनामैकभेषजम् ॥१०॥

(विठ्ठलनाम गर्जति महतोत्सवेन—निष्क्रामति च)

मध्यस्थः—दिष्ट्या, प्रनष्टोऽसौ भ्रष्टबुद्धिः। हे वृद्धे, आयाहि मया सह। दर्शयामि सत्पुरुषमन्दिरं यत्र परिपूर्णकामा भविष्यसि त्वम्।

वृद्धा स्त्री—भद्र, मधुमोदकास्त्वन्मुखे। कुत्रास्ति सत्पुरुषः।

मध्यस्थः—समीपे तिष्ठति स मन्त्रतन्त्रज्ञः। यद्यस्य वांछितं तत्तस्मै स दास्यति। किं करिष्यति पाषाणप्रतिमा विठ्ठलस्य वा वीरबाहोर्वा। श्रूयताम्—

दीपो दीपेन यथा सदने लोकैश्च दीप्यते नित्यम्।
तथैव जीवो जीवं नीरोगं कुर्यान्निजसामर्थ्यात् ॥११

शृणुत रे ग्रामस्थाः, अप्रतिमप्रभावोऽत्र विद्यते महाभागः सिद्धमन्त्रः। यद्यत्काम्यते युष्माभिस्तत्तत्सपद्येव प्रतिपाद्यते। अन्वागच्छत माम्। (इत्थमुद्घोषयति नैकवारम्। परिक्रामति च ग्रामस्थानुगतः सिद्धमन्त्रपुरुषम्)

(इन्द्रायणीतीरे तुकारामो हरिनामकीर्तनमग्नो नृत्यति)

तुकारामः—भो भगवन्—

श्रीकृष्णविक्रमयशो विबुधाभिवन्द्यं
श्रीकृष्णपादमहिमा भवरोगनाशः।
श्रीकृष्णरूपरुचिरत्वमवर्णनीयं
श्रीकृष्णनाम सरसं तुलनातिगम्यम् ॥ १२ ॥

(इतस्ततः परिक्रम्य) परिहर्तुमिच्छामि जनसंपर्कम्। एनं शिवभूपं प्रेषयामि श्रीरामदासपादमूलम्। तेन चाहं भविष्यामि निरुपाधिः। महाराष्ट्रराज्यमपि विवर्धेत सततम्। अहो नु खलु भोः। तं धर्मभास्करं द्रष्टुकामोऽस्मि—

आरक्तं वसनं बिभर्ति विमलं श्रीरामदासाग्रणी—
र्हस्ते दण्डमतोऽपि दण्डयति यो दुर्मानसान्दीपकः ।
यत्पादत्ररवादपैति दुरितं भीतोऽन्तकोऽपि स्वयं
धर्मोद्धाररतिं नतोऽस्म्यधिपतिं तं ब्रह्मनिष्ठं गुरुम् ।।१३।।

(पादुकारवः श्रूयते) हन्त भोः, समर्थपादुकारवः श्रूयते । (हर्षपुलकितो भूत्वा) भो सद्गुरो, भवद्दर्शनोत्सुकोऽहम् । ("विजयते रघुवीरः समर्थः" "विजयते रघुवीरः समर्थः" इति जयघोषेण निनादितमंबरम्) दिष्ट्या, सद्गुरुशब्देन परिपाविते मत्कर्णरन्ध्रे । (पुनश्च "विजयते रघुवीरः समर्थः" इति जयघोषः श्रुतिपथमायाति)

रामदासः—(सहसा प्रादुर्भूय) भो महाभागवत, बलवत्प्रीतोऽस्मि भवद्दर्शनेन । (परस्परं स्नेहालिङ्गनबद्धौ भवतः)

तुकारामः—(सहर्षम्) ब्रह्मगुरो,भृशमानन्दितोऽहम् । इदं पाषाणासनमलंक्रियताम् । (उभौ पाषणमध्यासाते)

रामदासः—भो विठ्ठलभक्त, किमिति न स्वीक्रियते शिवनृपः शिष्यरूपेण ।

तुकारामः—भगवन्, ज्ञातमेवात्रभवता यदल्पेनैव कालेनाधिगन्ताऽहं वैकुण्ठम् ।

रामदासः—मा, मैवम् । यतः किल—

तुकारामो नूनं तुलयितुमलं रामरविणा
त्वदाधारो धीरो भवति विधिवाच्यो जनपदे ।
श्रुतेरर्थो ज्ञातस्तदनु लिखितः प्राकृतमयस्-
त्वयैवेत्थं तस्मात्त्वमपि पुरुषः प्राणनिलयः ।।१४।।

तुकारामः—(सनिश्चयम्) भोः सद्गुरो, समाप्तप्रायं मदवतारकार्यम् । लीलाविलासे स्वच्छंदं कानिचिद्दिनानि नेतव्यानि प्रासंगिकं च किंचित्समाजकार्यं संपादनीयम् । परं महाराष्ट्रराज्यसंस्थापकस्य शिवभूपस्य गुरुत्वं नाङ्गीकर्तव्यं मया । भवानेव तत्कर्मणि नियुक्तः । श्रूयताम्—

मुक्तिः कन्या परिणयविधौ स्वीकृता भावभक्त्या
निःशेषं वै क्षयमुपगता वासना स्वान्तकोशात् ।
भाग्येनैते चरणकमले वीक्षिते वायुसूनोः
स्वानन्दाब्धौ विलुठनगतिः सौख्यरूपोऽस्मि जातः ।।१५।।

रामदासः—(सालिङ्गनम्) हे भक्तराज,ईश्वरेच्छा बलीयसी । तदनुरोधेनैव व्यवहर्तव्यमस्माभिः । अतीव दुष्करं राष्ट्रकार्यम् । वपुषा मनसा चैव दुर्बला

अस्मद्धर्मीयाः । प्रथमं तावच्चैतन्यमुत्पादनीयं तेषां चित्तेषु । ततश्च लोक-संग्रहः साधनीयः । तथाहि—

शरीरमाद्यं खलु धर्मसाधनं
ततो बलाढ्यास्तरुणाः सचेतनाः ।
हनूमतो भक्तिमतो नवेदये
मतिस्तदा राज्यविधौ प्रयोजका ॥१६॥

अन्यच्च

शरीरस्यापि सामर्थ्यं बुद्धेः साध्यं बलं सदा ।
उभाभ्यामेव पक्षाभ्यामुत्कर्षः पक्षिणां यथा ॥१७॥

तुकारामः—भो ब्रह्मनिष्ठ, भवद्वाक्यं प्रमाणम् । निर्दिश्यतां शिवनृपस्तदनुसारम् ।

रामदासः—(सान्तर्ज्ञानम्) अचिरादायास्यति स शिवनृपो भवद्दर्शनार्थम् । अनुज्ञायतां मत्प्रयाणमितः ।

तुकारामः—भगवन्, आस्वाद्यतां पायसमिदम् ।

रामदासः—ओम् । रामहृदयस्य प्रसादं किं न स्वीकुर्याम् । ( उभौ पायसं सेवेते) ( उभौ परस्परं गाढालिङ्गनं ददाते । ततो रामदासोऽन्तर्दधाति । "विजयते रघुवीरः समर्थः" ।— "विजयते रघुवीरः समर्थः"— इति जयघोषः श्रूयते । )

तुकारामः—(सहर्षम्) हन्त भोः । हनुमानेव साक्षादयं महापुरुषः । अहो रूपमहो वीर्यमहो धर्मधैर्यं श्रीरामभक्तस्य ।

(तदा केचिदश्वारोहा दूरतो दृश्यन्ते । )

शिवभूप आयातीति मन्ये । तं सान्त्वयामि सौम्यशब्दैः प्रेषयामि च श्रीरामदासं प्रति । ( ततः प्रविशति शिवनृपः)

शिवनृपः—( साञ्जलिबन्धम् ) भो महाभागवत, प्रणतोऽस्मि भवच्चरणयोः । (पादस्पर्शं करोति)

तुकारामः—अयि शिवभूप, विजयोऽस्तु ते । किमर्थमात्मा क्लिश्यतेऽत्रागमनेन ।

शिवनृपः—हे भक्तराज, भवद्दर्शनायागतोऽस्मि । उक्तं च—

धर्माश्रयेण मनुजा गुणिनो भवन्ति
तद्धर्मरूपमवगम्यमिहास्ति साधोः ।
सिद्धोत्तमः खलु भवाञ्जगति प्रसिद्ध—
स्तस्माद्भवत्सदयतां विनयेन लिप्से ॥ १८ ॥

तुकारामः—नाहं तादृशः साधुर्वा सिद्धो वा। असमर्थोऽहं त्वामुपदेष्टुम्। श्रूयताम्—

न जानामि नीतिं न वा धर्मवृत्तिं
न भूपालकार्यं न गोपालहार्यम्।
निकृष्टोऽस्मि जात्या निवृत्तः प्रकृत्या
अतोऽहं गुरुर्नैव राज्ञः सुयोग्यः॥ १९॥

शिवनृपः—हे विठ्ठलभक्त, निर्विण्णोऽस्मि प्रपंचकार्याद् राज्यव्यवहाराच्च। भवत्सान्निध्यात्परमार्थसाधनं कर्तुकामोऽस्मि।

तुकारामः—मा, मैवम्। स्वराज्यकार्यं प्रत्यग्रमेव समारब्धम्। त्वां विना को रक्षकः स्वधर्मीयाणाम्। राजनीतिकुशलो रामदासो लोकाग्रणीः कृष्णातीरेषु विचरति। स एव त्वद्गुरुर्विधिनियुक्तः। तथाहि।

चिरंजीवो नूनं हनुमदवतारो बलधरः
समर्थो भक्तानां रघुवरमसौ पूजयति वै।
स्थिरो ब्रह्माचारो विचरति विरक्तो द्युतिवरः
स्वधर्मस्याधारो विमलमतियुक्तस्तव गुरुः॥२०॥

शिवनृपः—कच्चिज्जानाति भवान् सद्गुरुं रामदासम्।

तुकारामः—अथ किम्। लोकविश्रुतः स महात्मा प्रवृत्तिनिवृत्तिचतुरो निर्देक्ष्यति त्वां स्वराज्यकार्ये। तच्चरणदत्तदृष्टिस्त्वं विजयी भूयाः।

शिवनृपः—भवानपि विरक्तशिरोमणिः। न स्वीकृतं भवता किमपि मदुपहारात्। उक्तं च—

निवृत्तो निःस्पृहो भक्तो विष्णुरूपः स्वयं मतः।
कथं जह्यां भवत्पादौ ध्रुवं धीमान्न वै त्यजेत्॥२१॥

तुकारामः—(विचार्य) हे शिवभूप, अलं निर्बन्धेन। दर्शयामि त्वां सद्गुरुस्वरूपम्। एकाग्रतया निरूपय मद्दक्षिणहस्तम्। (हस्तं दर्शयति। तत्र शिवनृपः पश्यति रामदासरूपम्। तेन च भवति नितान्तं विस्मितः।)

शिवनृपः—हन्त भोः। (पुलकिततनुर्भूत्वा) महापुरुषोऽयं सद्गुरुः। सस्मितवदनः शब्दापयति च माम्। गिरिगह्वरद्वारे शिलासनमध्यास्ते सद्गुरुर्मां चाह्वयति स्नेहेन।

अहो वीर्यमेतच्च धैर्यं समग्रम्
अहो कान्तिरेषा च शान्तिः सहासा।
अहो ब्रह्मतेजो महोत्साहयुक्तम्
अहो सर्वसाक्षित्वमीशानरूपम् ॥२२॥

भो विठ्ठलभक्त, गम्यते मया सद्गुरुसेवार्थम्। अनुज्ञायतां मत्प्रयाणम्।

तुकारामः—दिष्टया गुरुशिष्यसंगमो भविष्यति सत्वरम्। शुभास्ते पन्थानः सन्तु।

(समाप्तो द्वितीयः प्रवेशः)



## तृतीयः प्रवेशः

[पुण्यपत्तनस्थे लालमहालप्रासादे जिजामाता शिवभूपश्च]

शिवनृपः—अम्ब, अभिवादये भवतीम्।

जिजामाता—वत्स, चिरजीवी भूयाः। कुत्रागमस्त्वं ह्यस्तने दिने।

शिवनृपः—विठ्ठलभक्तं तुकारामं द्रष्टुम्।

जिजामाता—परमविरक्तो महाभागवतश्चेति स प्रथितयशा इति श्रूयते। तथाहि—

सत्यवचनवैराग्यं परेशभक्तिः परोपकारोऽपि।
महापुरुषचिह्नानि ज्ञातव्यानीह जनपदैर्व्यक्तम् ॥ २३ ॥

शिवनृपः—मयोपहारीकृतं सकलमपि धनं तेन निर्वर्तितम्।

जिजामाता—तत्पुनरपि केन हेतुना दृष्टः स भक्तराजस्त्वया।

शिवनृपः—शिष्यत्वेन तत्कृपाप्रसादं प्राप्तुम्।

जिजामाता—जात, गुरूपदेशस्तावत्प्राप्तव्यो वृद्धैः। प्रथमेवयसि वर्तमानस्त्वं भुजविक्रमं कर्तुं राजविलासं चोपभोक्तुमर्हसि।

शिवनृपः—अम्ब, उद्विग्नोऽस्मि जनपदानामन्तःकलहेन संघटनाभावेन च। श्रूयताम्—

क्षुद्रस्य लाभस्य कृतेऽपि लोका
ऐकैकमाहन्तुमिहैव सिद्धाः।
म्लेंछाक्रमे किन्तु पलायमानाः
संघेन नैवाचरणे मिलन्ति ॥ २४ ॥

जिजामाता---अज्ञजनानां नेतृत्वं कार्यं यत्नतः। चिरस्य संघटनाभावात् पारतंत्र्यादपि स्वत्वपराङ्मुखा जातास्ते। धैर्यमवलंब्यतां कार्यतां च महत्तरः प्रयत्नः। उक्तं च–

प्रारभ्यते न खलु कार्यमिहापि नीचैः
कुर्वन्ति मध्यमगुणाः क्वचिदेव कृत्यम्।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति॥ २५॥

शिवनृपः---सत्यं भवद्वचनम्। विठ्ठलभक्तेनापि तदेव कथितम्। अन्यच्च सद्गुरुं रामादासं द्रष्टुं निर्दिष्टोऽहम्।

जिजामाता---आम्। तदुद्दिश्यापि लोकवार्ता आकर्णिता मया। कथयन्ति ते–

ब्राह्मणः स महाभागः काषायवसनावृतः।
कूर्चं कमण्डलुं दण्डं भिक्षापात्रं च धारयन्॥२६॥

शिवनृपः---प्रत्यक्षीकृतं मया तत्स्वरूपम्।

जिजामाता---कुत्र कथं च।

शिवनृपः---तुकाराममहाशयेन दर्शितं तन्निजहस्ते। (हस्तं दर्शयति)

जिजामाता---(साश्चर्यम्) अम्मो, महदाश्चर्यम्।

शिवनृपः---अद्भुततममिति वक्तव्यम्। भवत्कृतं तत्स्वरूपवर्णनं तुल्यगुणं मद्दृष्टरूपेण। अन्यच्च, स सद्गुरुर्मामाह्वयतीति मया वीक्षितं तस्मिन् हस्ततलदर्पणे। अहो निसर्गसौन्दर्यं तन्निवासस्य–

रम्यस्तस्य निवास उच्चशिखरे शैलस्य शोभायुते
पाषाणोल्लिखिते च कन्दरवरे वृक्षावृते विस्तृते।
तोयौघाः प्रवहन्ति तत्परिसरे स्वच्छांभसा पूरिताः
पुष्पाणां स्तबकाः सुगन्धसहिताः प्रेंखन्ति वातेरिताः॥२७॥

जिजामाता---किं सर्वमपि दृग्गोचरमभूद् हस्ततलदर्पणे।

शिवनृपः---अथ किम्, अथ किम्। अतोऽहं ब्रवीमि–गन्तव्यं मया शीघ्रं सद्गुरुदर्शनार्थम्।

(" त्रायतां, त्रायतां मातः, त्रायताम् " इत्याक्रोशन्ती स्त्री बालकानुगता प्रविशति सहसा। जिजामातृचरणयोश्च पतति)

स्त्री---त्रायतां, मातः, त्रायताम्।

(शिवनृप उत्तिष्ठति स्वासनात्)

जिजामाता--वत्से, किमेतत् । ( परामृशति तां हस्तेन ) समाश्वसिहि ।
(भ्रान्तचित्तौ बालकौ तिष्ठतः)

स्त्री—मतिभ्रंशात् स्वामिना बहुलं धनधान्यं साधुवेषधारिणे म्लेंछाय समर्पितम् । नास्ति किमपि बालकयोर्भोजनार्थं गृहे ।

जिजामाता--(सचिन्तम्) हा कष्टम् । अक्षम्याज्ञानं जनानाम् ।

शिवनृपः--कः कोऽत्र द्वारदेशे ।

प्रतिहारः—(प्रविश्य प्रणम्य च) अयमस्मि देव ।

शिवनृपः—मालव्य, अत्रानीयतामस्याः पतिः ।

प्रतिहारः—यथाऽऽज्ञापयति देवः । (निष्क्रान्तः)

स्त्री—(सदैन्यम्) कपटवेशः स म्लेंछोऽस्मद्गृहे तिष्ठति तर्जयति च माम् ।

जिजामाता—(सोद्वेगम्) अहह, दुर्गतमिदं कुटुंबम् । (शिवनृपं प्रति) वत्स, सद्य एव निःसारणीयोऽसौ परधर्मीयः ।

शिवनृपः— (सोत्साहम्) अवश्यम् ।

जिजामाता—वत्से, मा शुचः । अत्रैवाद्य भुज्यतां बालकाभ्यां सह । स्थीयतां च निःशंकम् ।

स्त्री—मातः, अनुगृहीताः स्मः ।

जिजामाता—(दासीं प्रति) गिरिजे, नीयन्तामेतेऽतिथयोऽन्तर्गृहम् ।
(निष्क्रान्ता अतिथयो दास्या सह प्रविशति च पुरोहितः । जिजामाता उत्तिष्ठति प्रणमति च तम् । )

जिजामाता—भूदेव, अभिवादये भवन्तम् ।

पुरोहितः—कल्याणमस्तु । पुत्रपौत्राभिवृद्धिरस्तु । इदं तीर्थोदकं भवानीप्रसादश्चायम् । (पुरतः स्थापयति)

जिजामाता—इयं भवते दक्षिणा । (सुवर्णनाणकं ददाति)

पुरोहितः—(दक्षिणां गृहीत्वा) श्रीकृष्णार्पणमस्तु । श्रूयताम्—

गौरी महेशरमणी हिमवत्सुपुत्री
उग्रव्रता बलयुता शुचितानुरक्ता ।
हन्त्री निशाचरचमूधुरिणां प्रसिद्धा
दात्री च दास्यमतये वरविंशतीनाम् ॥२८

एतादृश्या भवानीदेव्या ये भक्तास्तेषां सकलसुखसंपदः सन्तु ।



## चतुर्थः प्रवेशः ।

[ हनुमन्मन्दिरे रामदासशिष्याः सूर्यनमस्कारानभ्यस्यन्ति ]

**मठपतिः**—ॐ भास्कराय नमः ।

**शिष्याः**—ॐ भास्कराय नमः । ( नमस्कारमभ्यस्यन्ति )

**मठपतिः**—ॐ श्रीसवितासूर्यनारायणाय नमः ।

**शिष्याः**—ॐ श्रीसवितासूर्यनारायणाय नमः ।

( नमस्कारमभ्यस्यन्ति )

सर्वे— ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ २९ ॥

( उपविशन्ति ते स्वासनेषु )

**मठपतिः**—भोः शिष्याः, सूर्यनारायणो महद्दैवतमस्माकम् । तथैवायं हनुमान्महाभागवतश्चिरंजीवी बलभीमः । तथाहि—

आरोग्यं भास्करादिच्छेद्बलमिच्छेद्धनूमतः ।
ज्ञानं सदाशिवादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ ३० ॥

पठत रे बालकाः—

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शरणं प्रपद्ये ॥ ३१ ॥

( सर्वे अनुपठन्ति भक्तियुक्तमनसा )

अधुना भिक्षापुटं गृहीत्वा गम्यतां ग्रामाद् ग्रामम् । आनीयतां च धनधान्यम् ।

**शिष्याः**—ओम् । ( निष्क्रान्ताः )

**मठपतिः**—भो भगवन्, सद्गुरू रामदासोऽस्माकं नायकः । उदात्तराष्ट्रकार्यमस्माभिः साध्यम् । तदर्थमेव तरुणा विनेतव्या धर्माचारे नीतिव्यवहारे च । ( श्रीमद्रामायणग्रंथं वाचयति ) ( अचिरात्काचित्स्त्री प्रविशति )

स्त्री--( प्रणम्य ) भो मुनिराज, भवत्पादमूलमायाताऽहं शरणार्थिनी ।

मठपतिः--भगिनि, कुत्रस्था त्वम् । किं चापेक्ष्यते मत्तः ।

(शिवनृपः पृष्ठतो निभृतं प्रविशति शृणोति च तयोर्भाषणम् )

स्त्री--दूरस्थग्रामादागताऽहं भवच्चरणौ सेवमाना वस्तुमिच्छाम्यस्मिन्नाश्रमे । गृहकलहनिर्विण्णाऽहं परमार्थसाधनमाचरिष्यामि ।

मठपतिः--नास्ति प्रवेशोऽत्र स्त्रीणाम् । न च कस्यापि परिचर्याऽपेक्ष्यते मया । इतः समीपे पुण्यपत्तने वसति राजमाता जिजादेवी। तदाश्रयं संप्राप्य व्यवह्रियतां यथेष्टम् ।

स्त्री---भोः स्वामिन्, कथं गन्तव्यं तत्र मया । क्षुधिता निर्धना चाहं संजाता ।

मठपतिः--गृह्यतामिदमन्नं द्रव्यं च । समीपस्थं नदीतटे भुज्यतामन्नं गम्यतां च पुण्यपत्तनम् । न स्थातव्यमत्र ।

(ददाति द्रव्यमन्नं च तस्यै । सा स्त्री गृह्णाति तत्सर्वं निष्क्रामति च सप्रणामम्)

शिवनृपः--(पुरतो भूत्वा) भोः समर्थभक्त, अभिवादये भवन्तम् ।

मठपतिः---(साश्चर्यानन्दम्) विजयोऽस्तु शिवभूपस्य । इदमासनमलंक्रियताम् ।

शिवनृपः---अपि समाप्ता प्रातरुपासना ।

मठपतिः---एवमेव । तदनन्तरं भिक्षार्थं निर्गतः शिष्यगणः ।

शिवनृपः--भोः समर्थभक्त, कुत्रास्ति निवासः श्रीरामदासमहोदयानाम् ।

मठपतिः---नैकस्मिन्नेव स्थाने । मठान्मठं परिभ्रमन्नास्तेऽस्मत्सद्गुरुः ।

शिवनृपः---तद्दर्शनार्थं जिगमिषामि ।

मठपतिः--प्रायशः सद्गुरुसंगमो भवतो भवेच्चाफलग्रामसन्निधौ गिरिगह्वरे ।

शिवनृपः--कृष्णानदीसमीपमेव विद्यते तत्स्थलम् । इत्यहं मन्ये ।

मठपतिः--बाढम् ।परं मध्यस्थप्रदेशे वर्तते स म्लेंच्छपक्षीयो मोरेकुलोत्पन्नश्चन्द्ररायो महद्बलसहायः। स विप्रकरोत्यस्मद्धर्मीयान् । उपकरोति च परधर्मीयान् यवनान् ।

शिवनृपः--आकर्णिता मया तदाक्रमणवृत्तान्ताः ।

मठपतिः--प्रथमं तावत्स चन्द्ररायो निग्रहीतव्यः । तेन च निष्कण्टको भवेत्संचारो भवतः कृष्णातीरेषु ।

शिवनृपः--निग्रहणात्प्राक् तं वशीकर्तुं प्रयतिष्यामः । यतः किल स्वधर्मीयः स विद्यते ।

मठपतिः--प्रशस्या भवन्मनोवृत्तिः।

(शिवनृपसैनिकौ म्लेंछमाकर्षतः)

सैनिकौ–आसादितोऽयं म्लेंछो देवालयपृष्ठतः ।

शिवनृपः—(साश्चर्यम्) किं कुर्वन्नासीत्सः ।

प्र० सैनिकः--लतागुल्मे निगूढोऽतिष्ठत् ।

द्वि० सैनिकः--कृपाणहस्त आवामभ्यद्रवच्च ।

शिवनृपः---नीयतां स कारागारम् । विमृशामस्तद्‌गतवृत्तान्तम् ।

(सैनिकौ निष्क्रान्तौ म्लेंछसहितौ)

मठपतिः---नैकवारमायान्ति यवना उपद्रवन्ति चास्मान् ।

शिवनृपः–नियोजयामि सैनिकसंघं भवद्रक्षणार्थम् ।

मठपतिः—भो भूपाल,नास्ति तदावश्यकता । सशस्त्राः सबलाः वयं न भीताः शात्र-वाक्रमणात् ।

शिवनृपः---साधु । एतादृशाः प्रगल्भतासंपन्ना बलशालिनश्च भवेयुरस्मद्धर्मीयाः । ततश्च राष्ट्रोत्कर्षः साधनीयः ।

भवादृशाः सद्धर्मा भूयिष्ठा यदि भवेयुरुद्दण्डाः ।
शीघ्रं राष्ट्रोद्धारः साध्योऽस्माकं शिवानुकूल्येन ।।३२।।

मठपतिः--भो भूपाल, करिष्यामः सर्वतः साहाय्यं स्वराज्यसंपादने ।

शक्तिश्च बुद्धिश्च सदैव साध्ये
स्वार्थो न कश्चित्स्पृहणीयरूपः ।
उत्साहवर्धो विधियन्त्रणार्थः
अस्मद्‌गुरोर्नीतिनयोऽस्ति मान्यः ।।३३।।

शिवनृपः—युज्यते । गम्यते मयाऽधुना ।

मठपतिः—गम्यतां पुनर्दर्शनाय । गुर्वर्थवृत्तं निवेदयामो भवभ्यो वारंवारम् ।

शिवनृपः—एतानि शतनिष्काणि वर्तन्तां भवद्धस्ते । उपयुज्यन्तां च विषमसमये ।

(शतनिष्काणि दातुमिच्छति)

मठपतिः—न किमपि प्रयोजनं तैः । क्षम्यतां भो भूपाल, तद्रक्षणमपि क्लेशकरं भवेदस्माकम् ।

शिवनृपः—भवतु । साधयामो निजनगरं प्रति ।

मठपतिः—शुभा भवन्तु भवत्पन्थानः ।

---

# द्वितीयोऽङ्कः

## प्रथमः प्रवेशः

[ जावलीदुर्गे चन्द्रराय: सचिवेन सह राज्यव्यवहारं पर्यालोचयति । ]

चन्द्रराय:— भोः सचिव, कच्चित्संप्राप्ता राजाज्ञा विजापुरात् ।

सचिव:— अथ किम् , स्वामिन् ।

चन्द्रराय:— को विशेषो दृश्यते तस्याम् ।

सचिव:— अस्मिन्संवत्सरे द्विरावृत्तोपहारः समादिष्टो यवनभूपेन ।

चन्द्रराय:— ( सविनयम् ) सादरं स्वीक्रियते राजाज्ञा । तदनुसारं कार्यविन्यासो विधीयताम् ।

सचिव:— स्वामिन् , क्षम्यतां स्पष्टोक्तिः । कुतः प्रदीयेत द्विरावृत्तोपहारः ।

चन्द्रराय:— प्रजाभ्य एव समाहर्तव्यः सः ।

सचिव:— महानुपप्लवो भवेत्प्रजानां तेन ।

तथाहि—

राजा प्रजापालनतत्परः स्या–
दित्येव तत्पात्रगुणो महीयान् ।
तासां प्रपीडा न यथार्हरूपा
तासां निवृत्तिर्हितकारका वै ॥ १ ॥

चन्द्रराय:— ( सापेक्षम् ) मन्दमतिमनोगतमिदम् ।

यत्सत्यम्—

अधिराजो यवनेशो बिजापुराच्छास्ति मण्डलं सर्वम् ।
तदधीनोऽस्मि नियोगी प्रजाहितं वाऽहितं न जानामि ॥२॥

[ ततः प्रविशति उत्कुटुंबः कृषीवलः पतति च चन्द्ररायस्य पादपीठे । ]

चन्द्रराय:— ( सरोषम् ) रे प्राकृत, किमर्थमागतोऽसि सोन्मादम् ।

कृषीवलः— देव, म्लेंछेनाक्रान्तं मदुटजं क्षेत्रं च । मां हन्तुं प्रधावति सः ।

चन्द्ररायः—अरेरे अशिष्ट,वैदेशिकोऽसौ विद्यते। तस्मान्महनीयो भवति तवाभ्यागतः।

कृषीवलः— मदीये क्षेत्रे न युक्तं तदाक्रमणम् । न्यायनिर्णयः क्रियतां राजपुरुषश्च प्रेष्यताम् ।

चन्द्ररायः—रे मूढ, अन्यं कमपि व्यापारं त्वं प्रतिपद्यस्व । भुज्यतां त्वत्क्षेत्रं तेनाभ्यागतेन ।

(कृषीवलस्तस्य कुटुंबिनश्च दुःखिता भूत्वा विलापं कुर्वन्ति)

कृषीवलः—नैष न्याय्यव्यवहारः —

चन्द्ररायः—(खड्गमुत्कर्ष्य) अपेहि रे कृषकहतक । नो चेद्धन्तव्योऽसि मया ।

(भीतभीताः प्रद्रवन्ति ते)

(सहासम्) कीटका एव प्रधावन्ति ननु ।
दुर्बला दुर्गताश्चापि नार्हन्ति करुणालवम् ।
म्लेंछान्सत्कृत्य संपद्ये यवनेशकृपास्पदम् ॥३॥

प्रतिहारः—(प्रविश्य प्रणम्य च) देव, पुण्यपत्तनाद् दूतौ समायातौ ।

चन्द्ररायः—(सहर्षम्) सपद्येव यवनेशसन्देशः संप्राप्तः । अहो मे भाग्यम् । (प्रतिहारं प्रति) प्रवेशय तौ सत्वरम् ।

(प्रतिहारो निष्क्रामति दूतसहितश्च प्रविशति पुनः)

प्रतिहारः—इत इत आगम्यताम् ।

दूतौ—स्वामिन्, प्रणामो भवत्पुरतः । (प्रणमतः)

चन्द्ररायः—कुत आगमनम् ।

दूतौ—पुण्यपत्तनादानीतः संदेशः शिवनृपस्य ।

चन्द्ररायः—(सगर्वम्) कोऽसौ शिवनृपः । कुत्र केन वाभिषिक्तो राज्यपदे ।

प्र. दुतः—स्वामिन्, क्षत्रियकुलोत्पन्नो भोसलेवंशदीपकः शहाजीसुतः ।

चन्द्ररायः—(साधिक्षेपम्) न जानामि तं नापि जिज्ञासे ।

प्र. दूतः—स्वामिन्, स्वधर्माभिमानी विक्रमशीलः स हिंदवीस्वराज्यस्थापने बद्धपरिकरो व्यवहरति । भवादृशानां विक्रान्तवीराणां सहकार्यमपेक्ष्यतेऽस्मिन् गुर्वर्थनियोजने ।

चन्द्ररायः—(सावेशम्) सम्राड् विजापुरयवनेशः प्रशास्ति सकलं राष्ट्रम् । तन्नियोगी राज्यव्यवहारं करोम्यहम् । न गणयामि भोसलेभाविकस्य मर्कटचेष्टितम् ।

प्र. दूतः—स्वामिन्, अत्रभवता वाच्योऽयं संदेशः। (पत्रपुटं ददाति)

चन्द्ररायः—(साधिक्षेपं तद्दूरं प्रक्षिपति) न स्वीकार्यः स्वयंमन्यस्य संदेशः। गम्यतां यथाऽऽगतम्।

(दूतौ खिन्नमुखौ पत्रपुटं गृहीत्वा निष्क्रान्तौ)

(इतस्ततः परिक्रम्य) हा हा, को गणयति दांभिकं स्वैरगतिं च।

(नेपथ्ये "रे दुरात्मन्, अनुभूयतां दुराचारदण्डः"—इति। "हा हतोऽस्मि" इति चाक्रोशौ श्रूयेते)

चन्द्ररायः—कः कोऽत्र द्वारदेशे।

प्रतिहारः—(प्रविश्य) देव, अयमस्मि।

चन्द्ररायः—खण्डाक्ष, ज्ञायतां कोऽसौ कोलाहलः शुद्धान्ते।

(प्रतिहारो निष्क्रामति प्रविशति च सपदि देवीराजकुमारीभ्यामनुगतः। राजकुमारीहस्ते वर्तते रुधिरावलिप्तः खड्गः। लज्जावनतमुखीं मातरं च संधारयते साऽन्यतरेण हस्तेन।)

चन्द्ररायः—(साश्चर्यम्) वत्से, किमेतत्।

राजकुमारी—(सावेशम्) छिन्नो मया तद्दुरात्मनो हस्तः।

चन्द्ररायः—कोऽसौ दुरात्मा।

राजकुमारी—कूर्चधरो यवनेशप्रतिनिधिः।

चंद्ररायः—किं दुष्चरितं तस्य।

राजकुमारी—मातरं स्प्रष्टुं तेन प्रसारितो हस्तः।

चंद्ररायः—(सोद्वेगम्) प्रथमं तावदौषधोपचाराः कर्तव्यास्तस्य। महद्व्यलीकं यवनेशस्य कृतं त्वया। (निष्क्रान्तः)

राजकुमारी—( निर्भयम् ) नाद्रियते मया किमपि तत्—

रक्षामि मातृवपुरात्मसमर्पणेन
धर्मस्य पालनमतः क्रमसाध्यमेव।
पुण्यात्मनामवनपोषणमेव पुण्यं
पापात्मनां हननमेव विवेककार्यम् ॥ ४॥

माता—वत्से, नैतादृशं परुषवचनं स्त्रीस्वभावसदृशम्। उक्तं च—

सदा सौम्यशब्दः सदा नम्रभावः
सदा त्यागबुद्धिः सदा सेवनार्थः।
न दृष्टिः कदाप्युन्नता स्यात्पुमांसं
न धृष्टाऽपि वृत्तिः कुलीनत्वहार्या ॥ ५॥

राजकुमारी—अयि अम्ब, स्वधर्माश्रिते स्वराज्ये स्वजनव्यवहारेषु वहुमान्या त्वद्विचारसरणिः। परं परधर्मीयाक्रान्ते स्वदेशे न सा हितावहा। ततोऽपि दुराचारान् दण्डयितुं धीरवृत्तिरिष्यते प्रमदा। तथाहि—

स्वत्वं रक्ष्यं सकलसुखदं स्वाभिमानाश्रितार्थं
स्वातंत्र्येच्छा गुणगणयुता शोभनाकामनाढ्या।
तस्माद्धीराः परमचतुराः प्रायतन्ते पुरोगाः
स्त्रीभिस्तेषां धृतिमतियुतं संप्रदेयं सपक्षम् ॥ ६ ॥

( समाप्तः प्रथमः प्रवेशः )

— ० —

## द्वितीयः प्रवेशः।

[ जावली–प्रदेशस्थवृक्षवाटिकायां सैनिकानुयातः शिवनृपः ]

शिवनृपः—( सहर्षम् ) अहो प्रशान्तमेतत्स्थलम्।

प्र० सैनिकः—देव, सुरचितेयं वृक्षवाटिका।

शिवनृपः—वाढम्। समृद्धशस्या वहुलफला च भूमिरियं दृश्यते।

प्र० सैनिकः—एवमेतत्। प्रचुरपर्जन्यप्रदेशोऽयम्। तेन वृक्षलताभिरावृतो वर्तते सर्वत्र।

शिवनृपः—सह्याचलभागोऽयं समृद्धः संबाधश्च। तथा हि—

उत्तुंगो गिरिकूटपंक्तिनिवहो नाकंलिहो राजते
उत्संगो द्रुमवल्लरीपरिवृतो भूयिष्ठलाभान्वितः।
हिंस्रश्वापदनैकवर्गनिकरा भ्राम्यन्ति गुल्मावृताः
संपन्ना जनता समुद्यमरता सन्तोषधर्माश्रिता ॥ ७ ॥

प्र० सैनिकः—सुष्ठु वर्णितोऽयं भूभागो देवेन। अगण्या निर्झरा वहन्ति समन्तात् स्वच्छजलपूर्णाः।



शिवनृपः—गिरिशिखरेभ्योऽपि बहूनि स्रोतांसि प्रस्रवन्ति निम्नप्रदेशेषु। श्रूयताम्—

शंकरो नु गिरिराजरूपभाक्
तिष्ठति स्थिरशिराः समुन्नतः ।
लम्बते शिखरतो जटाकचः
संततं सलिलवेगभासुरः ॥ ८ ॥

( दूतौ प्रविशतः सन्देशवाहकौ )

दूतौ—( प्रणम्य ) विजयोऽस्तु स्वामिनः ।

शिवनृपः—( सजिज्ञासम् ) भाविकौ का वार्त्ता ।

प्र० दूतः—( सखेदम् ) धिक्कृतः सन्देशश्चन्द्ररायेण ।

शिवनृपः—कथमिव ।

प्र० दूतः—"शिवनृपात्सन्देश आनीतः" इति मद्वचनं श्रुत्वा कोपकलंकितोऽभूत्सः ।

शिवनृपः—केन कारणेन ।

प्र० दूतः—"कुत्र वा केन वाऽभिषिक्तः स राजा" इति सोऽगर्जीत् । "विजापुरस्थो यवनेश एव नृपालपदवीमर्हति—नान्यः कोऽपि" इत्यपि प्रालपीत्।

शिवनृपः—भवतु । सन्देशवाचनानन्तरं किमवादीत्सः ।

प्र. दूतः—सन्देशपुटं क्रोधावेशाद् दूरं प्रक्षिप्तं तेन ।

शिवनृपः—(सविवेकम्) ईदृशी मदान्धता । (इतस्ततः परिक्रामति) सहकार्यार्थमपि न सिद्धता । तर्हि कृपाणखण्डिता भवेत्तत्रा । यतः किल—

संघः समानविधिभाषणराजकानां
भूयाद्बलाश्रितनयात्मबलाममोघः ।
इत्येव धर्मसहकारिणमेमि भावाद्
निःसारितोऽस्मि समदं यवनाश्रितेन ॥९॥

किं मन्यते युष्माभिः ।

प्र. दूतः—बलवत्संतप्तोऽहं तदौद्धत्येन । परं स्वात्मनिग्रहं कृत्वा तूर्णीं प्रत्यानिवृत्तः ।

प्र. सैनिकः—राजनीतिविरुद्धं चन्द्ररायस्याचरणम् । संरंभी चाविवेकी चासौ विद्यते ।

शिवनृपः—अपरं च स्वाभिमानहीनो यवनपक्षीयः सर्वथा स दृश्यते । नान्या गतिः —

समाजकण्टको नूनं स्वराज्यभेदकोऽपि वा।
उच्छेद्यो मूलतो ह्याशु स्थैर्याय च सुखाय च ।।१०।।

प्र. सैनिकः—देव, मान्या भवद्विचारसरणिः। परं महत्साहसमिदं यदि सपद्येव प्रतियुध्येत तेन सह। दुर्गमोऽस्य दुर्गः समर्थं चास्य सैन्यम्।

शिवनृपः—अवितथम्। तथापि—

प्रतिवसति साहसे श्रीस्तस्मात्सहसैव विक्रमं कुर्मः।
अतर्कितोऽवस्कंदो भूयात्सफलः शिवाप्रसादेन ।।११।।

सर्वे—ओम्। सिद्धाः स्मो देवनियोगमनुष्ठातुम्।

शिवनृपः—साधु। सेनानिवेशो रात्रौ निर्णयामोऽखिलप्रयोगम्। साधयामोऽधुना। (परिक्रामन्ति सर्वे। शिवालयं च प्राप्नुवन्ति। तत्र सखीभ्यामनुयाता राजकुमारी दृष्टिपथमायाति। उभौ पक्षौ विस्मितौ भवतः।)

राजकुमारी—(सधैर्यम्) न विहितः प्रवेशोऽस्मिन् देवालये यवनानाम्। (खड्गमाकर्षति)

प्र०सैनिकः—राजकुमारि, न वयं यवनाः। किंतु हिंदुधर्मीया एव। एषोऽस्माकं स्वामी ख्यातनामा शिवनृपः।
(सर्वे साञ्जलिबन्धं नमन्ति। राजकुमारीहस्तात्खड्गः पतत्यधः। सा च भवति मदनाहता मनसि। शिवनृपोऽपि तत्सौन्दर्येण विस्मयमापन्नः।)

शिवनृपः—(सविनयम्) अधुना शिवदर्शनमनुज्ञायते किमस्माकम्।

प्र०सखी—(सहासम्) देव, न कोऽपि प्रत्यवायः। क्षम्यतां राजकुमारीतर्जनम्।

शिवनृपः—नावश्यकी क्षमायाचना। प्रत्युत भृशं सन्तुष्टोऽस्मि भवत्सख्या वीरवचनेन। विरला हि धैर्यवत्यः प्रमदा एतादृश्यः। (पुरतो भवति शिवदर्शनाय। सुवर्णनाणकं च तत्र देहल्यां समर्पयति।)

द्वि०सखी—(राजकुमारीं हस्तेन संस्पृश्य) भर्तृदारिके, धन्यवादं ब्रवीतु भवती शिवनृपाय।

राजकुमारी—(अलीकरोषेण) हला, अलं नर्मालापेन। (सर्वे हसन्ति)

प्र०सखी—कुत्र गता धीरवृत्तिर्भवत्याः?

द्वि०सखी—(सस्मितम्) शिवनृपेणापहृता।

राजकुमारी—(कृतककोपेन) हला, मा खलु असम्बद्धं प्रलप। [partly obscured]

शिवनृपः--(भूमौ पतितं राजकुमारीकृपाणमुद्धरति) अयं खड्गो भवत्सख्याः। (दातुं यतते परं न काऽपि कुमारी तं गृह्णाति ) (राजकुमारी सख्यौ हस्त-संकेतेन स्तभ्नाति । )

प्र०सखी--उपहारीकृतोऽयं करवालो भर्तृदारिकया शिवनृपाय। (राजकुमारी लज्जां नाटयति)

शिवनृपः--(सहर्षम्) महानयं प्रसादो राजकुमार्याः।

द्वि०सखी--(साकूतम्) एष तावत्प्रसादारंभः ।

राजकुमारी-- ( सव्याजम् ) कृतमसंबद्धजल्पनेन ।

सख्यौ-- ( सहासम् ) विरम्यत आवाभ्याम्। भवत्या क्रियतां सुसंबद्धालापः शिवनृपेण सार्धम् । ( ते पीडयति सांऽगुल्या )

शिवनृपः-- भवतु। साधयामो निवासं प्रति । विशिष्टोऽयं दर्शनलाभः । तथाहि-

इतः शिवपदं समीक्षितमहो महाभाग्यतः
इतः शशिमुखी दृशां सुविषयः समापद्यत।
प्रभो प्रणतपालक स्थिरमतिर्जनानां भवेत्
स्वधर्मपरिपालने रिपुजये धृतिर्जायताम् ॥१२॥

प्र. दूतः--किं कुलं पावितमनया राजकुमार्या। किं चाभिधानमस्याः।

प्र. सखी--मोरे कुलोत्पन्नस्य चन्द्ररायस्य दुहितेयम्। चन्द्रभागेति नाम्ना विश्रुता। शिवनृपवदेषाऽपि गानकुशला।

राजकुमारी--हला, अलमतिशयेन संवर्ण्य।

सख्यौ-- ( सस्मितम् ) शिवनृपः स्वयं वर्णयेत् ;

[ निष्क्रान्ताः शिवनृपदूतसैनिकाः परस्परं प्रणम्य । ]

राजकुमारी-- ( देहल्याः सुवर्णनाणकं गृहीत्वा सहर्षम् ) मदीयमिदं सुवर्ण-नाणकम्।

सख्यौ-- केन प्रदत्तम् ।

राजकुमारी--ईश्वरेण ।

सख्यौ-- किं तस्य नाम ।

राजकुमारी--शंकरः-- धूर्जटिः-- गंगाधरः-- उमापतिः-- इति बहूनि तस्य नामानि ।



सख्यौ--अक्षरद्वययुतं किं नाम तस्य ।

राजकुमारी--(सलज्जम्) न जाने तत् ।

सख्यौ--हृदयदेशे तदुल्लिखितम् । कथं न ज्ञातम् ।

राजकुमारी--सख्यौ, अलं परिहासेन । संध्यासमयः संजातः । गन्तव्यमस्माभिर्गृहमधुना ।

प्र.सखी--उच्यते भवत्या "यदीश्वरेण" प्रदत्तमिदं सुवर्णनाणकम् । किं जगदीश्वरेण वा हृदयेश्वरेण वा ।

राजकुमारी--(सलज्जम्) न कथयामि । नापि जानामि (परिक्रामन्ति सर्वाः)

द्वि. सखी--भर्तृदारिके, किमर्थं खड्गः परित्यक्तो भवत्या शिवनृपनामश्रवणात् ।

राजकुमारी—हला, यत्सत्यं विवशा संवृत्ताऽहं तस्मिन्नेव क्षणे । किं कुर्याम्—

दृष्ट्वैव तं पुरुषसिंहमुदग्रदेहं
स्फीतांसुबाहुयुगमीक्षणदीप्तिमन्तम् ।
नासाकृतिं गरुडचञ्चुनिभां धरन्तं
आत्मानमाशु विगतासुमिवान्वभूवम् ॥१३॥

प्र. सखी--स्थाने खलु समर्पणं कृतं स्वात्मनः ।

द्वि. सखी--अलमतिशयेन संवर्ण्य । केवलं शरीरसौष्ठवं न पर्याप्तम् । विश्रुतविक्रमेणापि पुरुषेण भाव्यम् । गुणवत्ता चैव स्पृहणीया तस्य ।

राजकुमारी--(सोत्साहम्) किं नाकर्णितो विक्रमोऽस्य नरवीरस्य गुणगणश्च । श्रूयताम्—

शक्त्या च युक्त्या च जिता हि दुर्गाः
सैन्यं समानीतमुदग्रशस्त्रम् ।
भावातितो भाति स मातृदेवः
आचार्यदेवोऽपि तथैव मान्यः ॥१४॥

द्वि. सखी—किं न गीतमिदं वर्णनं तदानीम् ।

(राजकुमारी तां ताडयति हस्तेन निष्क्रामति च सख्यनुगता)

सख्यौ--अपराधः शिवनृपस्य । दण्डश्चावयोः ।

राजकुमारी -- (सलज्जम्) एष एव स्नेहन्यायः ।

(समाप्तो द्वितीयः प्रवेशः)

## तृतीयः प्रवेशः

[ सेनानिवेशे शिवनृपो विमृशति चन्द्ररायदुर्गाभियोगं बलाधिकारिभिः सह । ]

शिवनृपः--भोः सचिवा योद्धारश्च, चन्द्ररायप्रबोधनं न शक्यम् । इति भवद्भिर्ज्ञातमेव ।

सचिवः--अन्यच्च, सोऽवमन्यते भवन्तम् । असह्या खलु मनोवृत्तिरीदृशी ।

शिवनृपः--व्यक्तिगतमधिक्षेपं न तथा गणयामि यथा स्वजनदुर्गतिं स्वधर्मधिक्कृतिं च । उक्तं च प्राचीनैः--

धर्मो धारयते मतिं शुभगतिं श्रद्धाधृतिं सत्कृतिं
धर्मभ्रष्टनरो विकारकलुषः कापेयवृत्तिर्भवेत् ।
सत्ताधीश इतःपरोऽपि जनतापीडां करोति ध्रुवं
दण्ड्योऽसौ नियतं स्वधर्मरतिभिर्लोकाभिवृध्द्यै व्रतम् ॥१५॥

सचिवः--यवनाधिपेन द्विगुणोपहार आज्ञापितोऽस्मिन्संवत्सरे । तदर्थं प्रजाभ्यो द्विगुणं राजस्वं समाह्रियते प्रसभम् ।

शिवनृपः--अहह, किं कुर्वन्ति प्रजाजना अगतिकाः । परमेषोऽधर्म उपद्रवश्च राज्यमन्दिरमुत्पाटयिष्यतः शीघ्रम् । तथाहि--

क्षेत्रस्य कर्षणमतीव फलप्रदायि
तद्वत्प्रजासुखकरं नृपशासनं स्यात् ।
लोकानुरंजनरतो नरलोकपालो
लोकावलुंठनपरः खलु तस्करोऽस्ति ॥१६॥

सचिवः--अन्यच्च, बहवो म्लेंछा विजापुरादागत्य हिंदुधर्मीयाणां क्षेत्राणि बलादपहृत्य च विधिविरुद्धं भवन्त्यत्रस्थाः । चन्द्ररायो नावदधाति स्वजनानां दुःखनिवेदनम् ।

शिवनृपः--अहो दुर्बुद्धिः स्वकीयक्षयकारकस्य । यतः किल--

ज्ञातीनां बान्धवानां च हानिं यो जनयत्यहो ।
स्वचितां रचयत्येष इतो भ्रष्टस्ततो व्रुतः ॥१७॥

अतोऽहं ब्रवीमि यदभियुज्यतामस्य दुर्गः सत्वरम् ।



सेनापतिः--चन्द्ररायस्य बलसंख्या ज्ञातव्या । किं च दुर्गाक्रमणस्य गुप्तमार्गा द्रष्टव्याः ।

शिवनृपः--परं रिपुरलक्षितमभिपात्यः। यदि सोऽस्मदागमनं ज्ञास्यति तर्हि दुरतिक्रमो भविष्यति। उक्तं च-

अकस्मात्पराहन्ति युद्धे रिपुं यः।
समाप्नोति सिद्धिं सुखेनैव शूरः।
समस्ता प्रवृत्तिः समापादितव्या
समग्रं विधानं समानीयमुग्रम् ॥१८॥

द्वारपालः--(प्रविश्य) देव, दूतस्तिष्ठति द्वारदेशे देवं च द्रष्टुमिच्छति।

शिवनृपः--किं स एकाकी समागतः।

द्वारपालः--नहि, नहि। कश्चिदपरिचितः पुरुषो वर्तते तेन सह।

शिवनृपः--प्रवेशय तौ सत्वरम्।

सेनापतिः--देव, अहं परीक्षे तमज्ञातपूर्वं प्रथमतः।

शिवनृपः--युक्तम्। एवं क्रियताम्।

(सेनापतिर्बहिः प्रयाति द्वारपालेन सह) संरक्षितोऽस्मि सेनापतिना। यतः किल—

छद्मेन भूपं रिपवोऽनुयान्ति
विप्लावयन्ति प्रसभं सशस्त्राः।
विश्वासयोग्यो न हि पारकीयः
सूक्ष्मं निरूप्यैव स दर्शनीयः ॥ १९

(ततः प्रविशन्ति सेनापतिर्दूतो वैदेशिकश्च)

दूतः—देव, एष ग्रामस्थो जानाति दुर्गवृत्तमखिलम्। दर्शयिष्यति च गुप्तमार्गं दुर्गस्य। (सर्वे प्रणमन्ति शिवनृपम्)

शिवनृपः--भद्र, कस्त्वं कुतश्चायातः।

वैदेशिकः--देव, कृषकोऽहम्। पञ्चवटग्रामादागतोऽस्मि। यवनेनाक्रान्तं मत्क्षेत्रम्। चन्द्ररायो न प्रतिकरोति तम्। मां चोपदिशति तं सेवितुम्।

शिवनृपः--वयं करिष्यामस्तव साहाय्यम्। प्रथमं कथय--कति सैनिका वर्तन्ते दुर्गभागे।

कृषकः--शतत्रयमेव योधानां दुर्गे। न चान्यस्त्राणि तद्धस्तेषु।

शिवनृपः--कच्चिद्यवना निवसन्ति तेषु।

कृषकः—अथ किम्। गणनायकाः सर्वे म्लेंछाः।

शिवनृपः—दुर्गस्य गुप्तमार्गं दर्शयिष्यसि किं प्रत्यूषे।

कृषकः—बाढम्। मद्यपाः सर्वे सुखलोलुपा यवनाः सूर्योदयपर्यन्तं मदोन्मत्ता विलुठन्ति तल्पेषु। तत्पूर्वमेवाभिद्राव्यास्ते सर्वे।

शिवनृपः—शपथपूर्वं कथय—कुलदैवतस्मरणं कृत्वा कथय।

कृषक—देव, श्रीभवानीनाम्ना शपे यत्सत्यमेव ब्रवीमि भवत्पुरतः।

शिवनृपः—साधु। भद्र, अस्मदीयोऽधुना त्वम्। गृह्यतामेष उपहारः।

(तस्मै ददाति खड्गफलकं महावस्त्रं च।)

(कृषकः सप्रणामं तत्सर्वं स्वीकरोति।)

कृषकः—देव, महानयं प्रसादः।

शिवनृपः—भो भोः शूराः स्वराज्यसैनिकाः, अद्यैव जावलीदुर्गं आक्रमितव्यः। तथाहि—

शिवस्यैव नाम्ना जयोन्मादघोषं
भवानीप्रबोधेन कृत्वा प्रवीराः।
प्रयामोऽधुनैवात्तशस्त्रा रणाग्रे
जयामो जनानां सुखार्थं हितार्थम्॥ २०॥

(सर्वे "हर हर महादेव, हरहर महादेव" इति संग्रामघोषं कुर्वन्ति।)

(तृतीयः प्रवेशः समाप्तः)

— ० —

## चतुर्थः प्रवेशः

[ जावली-दुर्गप्रासादे राज्यसभायां शिवनृपः, चन्द्ररायपुत्रः, चन्द्ररायामात्याश्च स्वस्वस्थानोपविष्टाः। ]

अमात्यः—भोः शिवनृप, विक्रान्तवीर, भवद्भिर्विजितोऽयं दुर्गः। रणाग्रे निहताश्चन्द्ररायः पक्षपातिनश्च तस्य यवनाः।

शिवनृपः—चन्द्ररायो हतोऽस्मिन्युद्धे—इति महद्दुःखमस्माकम् । जीवन्नेव स निरोद्धव्य इति मन्मानसमासीत् । परं तदभूदशक्यम् ।

अमात्यः—स्वजनविरोधस्य स्वधर्मभेदकस्य च पातकफलं तेनानुभूतमिति मन्यामहे। स्वधर्मपालकः स्वजनपोषकश्चात्रभवान् ।

शिवनृपः—किं कुटुंबिनोऽपि मन्यन्ते तदेव ।

अमात्यः—देव, एवमेव । स्वानुभवप्रत्यय एतादृशः सर्वेषां कुटुंबिनाम् ।

शिवनृपः—भोः सभ्याः, भूतकालावलीढं गंगाजलपूतमिति मन्तव्यं विस्मर्तव्यं च । हितैषिभिर्विवेकिभिश्च भविष्यत्काले दृष्टिर्विधातव्या । उक्तं च पूर्वसूरिभिः

राजा यत्र न वर्तते जनपदः सोऽस्तीव वैक्लव्यभाक्
संक्षोभाः प्रभवन्ति तत्र बहुशो नास्त्येव शान्तिः सुखम् ।
तस्माच्छासकयोजना समुचिता कार्या सभानायकै–
र्लोकानां स्थिरता भवेद्धितकरी मा स्यादितोऽराजकम् ॥ २१ ॥

अमात्यः—हन्त भोः, सर्वमान्योऽयं प्रस्तावः । देव, अत्रभवानेव सिंहासनमारोहतु । प्रवर्तयतु च राज्यव्यवहारम् ।

शिवनृपः—मा, मैवम् । महति हिंदवीस्वराज्यव्यापारे व्यापृतोऽस्मि । चन्द्ररायसुतः समाध्यास्तां सिंहासनम्। अस्मन्नियोगमनुसृत्य च वर्ततां नीतिनियमानुसारम् ।

अमात्यः—ओम् । अत्रभवद्वाक्यं प्रमाणम् । राज्यलोभेन भवच्चित्तं नाकृष्टमित्यहो महौदार्यं शिवनृपस्य ।

( शिवनृपः स्वयं चन्द्ररायसुतं सिंहासन उपवेशयति । तेन च सर्वे सानन्दमभिनन्दन्ति । ) ( मंगलवाद्यानि श्रूयन्ते । शिवनृपसचिवो नूतनाधिपाय प्रयच्छत्युपहारम् । अमात्योऽपि शिवनृपाय महावस्त्रालंकारान्समर्पयति । )

शिवनृपः—भोः सभ्याः, स्वधर्मानुरोधेन स्वराज्यकार्यं प्रवर्तितव्यम् । स्यस्मद्योजना । तस्याः शुभारंभः संवृत्तोऽद्यास्मिन्प्रदेशे । तथाहि—

अशुभाच्छुभं प्रतीतं समरोद्रेकात्स्वधर्मसाम्राज्यम् ।
जनपदहितं समस्तं कुलस्य शीलं सुरक्षितं युक्तम् ॥ २२ ॥

अमात्यः—देव, अनुगृहीताः स्मः । भवत्प्रतिनिधिरत्र नियुज्यताम् ।

शिवनृपः—अवश्यम् । स च मार्गदर्शनं करिष्यति शासनकार्ये ।

अमात्यः—विजापुराधीशः क्रुद्धो भवेत् ।

शिवनृपः—वयं वारयामस्तदवस्कंदम् । न काऽपि चिन्ताऽस्तु तद्गता ।

अमात्यः—शुल्कमपि न दातव्यं तस्मै भविष्यत्काले ।

शिवनृपः—न तस्य किंचिदपि देयमृणम् । अस्मत्सेनानिवेशो वर्तेतासमन्तात् । तद्वेतननिस्तारो युष्माभिः कर्तव्यः ।

अमात्यः—ओम् । तत्स्वराज्यकार्यमेव भवेत् ।

शिवनृपः—साधु । महान्सन्तोषो मे यत्स्वराज्ययोजना वृद्धि प्राप्नोति भवत्साहाय्येन । अधुना—

प्रस्थातव्यं सपदि पृतनाभाररूपस्रवेण
मार्गे यान्ति प्रतनुजलधारा द्रुतं दाक्षिणात्याः ।
भाग्येनेत्थं भवति भविकं मेलनं सद्गुरोर्मे
सत्संगो वै सुखदसुखदो वीक्षितो धर्मवीरैः ॥२३॥

अमात्यः—शुभा भवत्पंथानः सन्तु ।

( निष्क्रान्ताः सर्वे शिवनृपवर्ज्यम् )

शिवनृपः—( सानन्दम् ) काकतालीयन्यायेन चन्द्ररायराजकुमारी तदा मद्दृष्टिपथमायाता तस्मिन् शिवमन्दिरे । सैव सुन्दरी मयाऽद्य द्रष्टव्या—इत्यहो दैवयोगः ।

कमलमृदुलकाया चन्द्रिकाकान्तियुक्ता
हरिणतरलनेत्रा चंपकाकारनासा ।
शशिनिभमुखशोभा यौवनाक्रान्तगात्रा
प्रणयसुलभरूपा दृष्टमात्रानुरक्ता ॥२४॥

मन्नामश्रवणादेव तद्धस्ताद् गलितः कृपाणः । स चोपहारीकृतो मह्यम् । तदानींतनस्तन्मुखरक्तिमा सूर्योदयारुणरागेणोपमितुं योग्यः ।

( ततः प्रविशन्ति राजकुमारी सख्यौ च )

शिवनृपः—( साञ्जलिबन्धम् ) स्वागतं राजकुमार्यै सखीसहितायै ।

प्र० सखी—भर्तृदारिके, त्वयैव शिवनृपाय स्वागतं व्याहर्तव्यम् ।

( राजकुमारी लज्जान्विता हसति )

द्वि० सखी—नहि, नहि । शिवनृपो वर्तते विजेता । तेन स्वागतं व्याहृतमित्येव युक्तम् ।

शिवनृपः—विजेतेति बुद्ध्या नोक्तं तन्मया । प्रथमं स्थानेऽस्मिन्नहमासन् । इत्येव तन्मम कर्तव्यमभूत् ।

राजकुमारी—मत्सोदराय राज्यपदं समर्पितमत्रभवता । तदर्थमुपकृताऽस्मि ।

शिवनृपः—ननु तदीयमेव राज्यमिदं स्मृतिशास्त्रदृष्टया ।

राजकुमारी—अत्रभवतो महानुभावत्वमप्रतिमम् ।

प्र० सखी—तस्मिन्देवालये देहल्यां यत्सुवर्णनाणकं भवता विसृष्टं तद्राजकुमार्या गृहीतम् ।

शिवनृपः—हन्त भोः, किं शिवप्रसाद इति बुद्ध्या ।

द्वि. सखी—नहि, नहि । शिवनृपस्य प्रसादरूपेण ।

राजकुमारी—(अलीककोपात्) असंबद्धप्रलापिनि— (तामंगुल्या पीडयति)

शिवनृपः—कुत्रास्ति तन्नाणकम् । तेन सह मणिमालेयं दीयते ।

प्र. सखी—तन्नाणकं सुवर्णपुटे निहितं कण्ठेकृतं च राजकुमार्या । प्रत्यक्षीक्रियताम् । (दर्शयितुं यतते परं राजकुमारी निःसारयति ताम् । )

द्वि. सखी—गे मन्दमते, रहसि दर्शयिष्यति तत् । नास्मत्समक्षम् ।

शिवनृपः—(सस्मितम्) मा खलु परिहस्यातिमात्रम् ।

प्र.सखी—सुवर्णनाणकस्यार्थे न कृतज्ञता प्रदर्शिता राजकुमार्या ।

द्वि. सखी—तामपि रहसि प्रदर्शयिष्यति ।

( तामंगुल्या पीडयति राजकुमारी )

प्र. सखी—अत्रभवता विश्राम्यतामस्मिन्मन्दिरे । यावदावां पायसमानयावः । (सख्यौ निष्क्रामतः )

राजकुमारी—मामपि नयतम् ।

(सख्यौ विहस्य तां हस्ताभ्यां निवारयतः)

शिवनृपः—प्रिये, चतुरे नाम त्वत्सख्यौ ।

राजकुमारी—बलवत्परिहासप्रियौ । नानुमोदे तन्नर्मवाक्यानि । (अलीककोपेन पश्यति)

शिवनृपः—दयिते, इयं मणिमाला त्वत्कण्ठे राजताम् । (तस्याः कण्ठे मणिमालां विसृजति । सुवर्णनाणकं च हस्तेन गृह्णाति) इदमेव तत्सुवर्णनाणकम् ।

राजकुमारी—(सलज्जम्) आम् ।

शिवनृपः—(तस्या हस्तं हस्तेन गृहीत्वा) हृदयेश्वरि, महता दैवयोगेनावां संगतौ । तथाहि—

अकस्मादायाता तडिदिव यथा मन्नयनयो-
र्वचो वै स्वावेशादुदितमतिसंतर्जनधिया ।
अलौकिक्यो नार्यो जगति ननु धैर्यैकमतयो
महातेजोरूपा त्वमसि तदुपाधिश्रितवरा ॥२५॥

राजकुमारी--भवद्विक्रमापेक्षया किं मत्तेजसा वा धैर्येण वा ।

शिवनृपः—अपि श्रुतपूर्वमासीन्मन्नाम तदा त्वया ।

राजकुमारी—बाढम् । ख्यातनामा खलु भवान् ।

शिवनृपः--कच्चित्तदर्थं कृपाणो गलितस्त्वद्धस्तात् ।

राजकुमारी—एवमेव । अपरं च भवन्महाप्राणतां महानुभावतां च वीक्ष्य विवशा संवृत्ताऽहं तदानीम् ।

शिवनृपः—कीदृशी मनोवृत्तिरघुना ।

राजकुमारी—(सलज्जम्) ज्ञापनातिक्रान्ता सा ।

शिवनृपः--(तामालिङ्ग्य) एवंरूपा नूनम् ।

सुतनु हृदये स्थानापन्ना तव प्रतिमा शुभा
शिवभवनजात्संयोगाद्वै स्मराकुलचेतसि ।
सुखदसमये संप्राप्ता त्वं मदीयभुजांतरे
ननु नभसिजा विद्युल्लेखा वलाहकमध्यगा ॥२६॥

(विचार्य) त्वमतीव गानकुशलेति सखीभ्यां वर्णितम् । गीयतां तर्हि पद्यमेकम् ।

राजकुमारी--विनोदवचनं तत्तयोः । अन्यच्च, नाहं स्ववशाऽधुनाऽभिगातुम् । सर्वस्वमर्पितम्-(तस्योरसि मस्तकमुपदधाति)

शिवनृपः--प्रिये,

आनन्ददीक्षादिनमद्य दिष्ठं
दैवेन दिष्टया दयितानिधाने ।
संयोग एषोऽत्र मया त्वदीयो
भाग्येन जातो भवसौख्यदायी ॥२७॥

(चतुर्थः प्रवेशो द्वितीयोऽङ्कश्च समाप्तः)



—☆—

# तृतीयोऽङ्कः ।

## प्रथमः प्रवेशः ।

[ चाफळग्रामे शिवनृपः ससैन्यो रामदासमन्विष्यति । ]

ग्रामस्थः—भोः संग्रामवीर, कस्य भूपालस्य चमूरियम् ।

सैनिकः—स्वराज्यसंस्थापकस्य शिवनृपस्य ।

ग्रामस्थः—किमर्थमायाता यूयमत्र ।

सैनिकः—भद्र, रामदासो नाम महानीश्वरभक्तो निवसति समीपे । तद्दर्शनार्थमागतः शिवनृपः । कच्चिज्ज्ञायते भवता तत्सत्पुरुषस्थानम् ।

ग्रामस्थः—अथ किम् । तथापि रामदासो न सर्वदैकस्मिन्स्थाने द्रष्टव्यः । "विजयते रघुवीरः समर्थः"—"विजयते रघुवीरः समर्थः"—इति तद्घोषणा श्रूयते समन्तात् स्थाने स्थाने ।

सैनिकः—आगम्यतां शिवनृपं प्रति । कथ्यतां च सर्वं तस्मै ।

( परिक्रामतः । ग्रामस्थः शिवनृपं प्रणमति । )

शिवनृपः—भद्र, अपि कुशलं ग्रामस्थानाम् ।

ग्रामस्थः—आम् । सर्वथा कुशलिनो वयम् ।

शिवनृपः—रामदासनिवासं दर्शयति किं भवान् ।

ग्रामस्थः—अथ किम्, देव ।

( काचित्स्त्री फलकरंडं स्थापयति शिवनृपस्य पुरतः । प्रणमति च । )

शिवनृपः—मातः, अपि मदर्थमिमानि फलानि ।

स्त्री—एवमेव, देव । मत्क्षेत्रोत्पन्नानि ।

शिवनृपः—साधु । गृह्यतामिमानि सुवर्णनाणकानि तदर्थम् । ( दातुमिच्छति )

स्त्री—क्षम्यताम् । न स्वीक्रियते फलमूल्यम् ।

शिवनृपः—मातः, क्षेत्रकार्ये द्रव्यमिदमुपयुज्यताम् ।



स्त्री—एवं करिष्यामि । ( स्वीकरोति द्रव्यम् )

( केचिद्बालाः प्रविशन्ति शिवनृपं दृष्ट्वा च "यवन आयातः—अहह,यवनः" इत्याक्रोशन्ति । )

शिवनृपः—भोः सैनिकाः, कथयत सर्वेभ्यो ग्रामे यन्नाहं यवन इति ।

सैनिकाः—यथाऽऽज्ञापयति देवः ।

( निष्क्रान्ताः )

शिवनृपः—भद्र, दर्शय रामदासनिवासम् ।

ग्रामस्थः—आम् । एतु, एतु देवः ।

( सर्वे परिक्रामन्ति )

शिवनृपः—हन्त भोः । दृष्टपूर्वोऽयं पर्वतप्रदेशः । (पूर्वस्मृतिं नाटयित्वा) तुकाराम-साधोर्हस्तदर्पणे मयाऽवलोकितं सर्वमिदम् । तथाहि—

एषोऽस्ति पर्वततटो द्रुमराजियुक्तः
एषैव निम्नगतिरुत्तमतोयपूर्णा ।
शीतश्च वातजवनः सुखयत्यभीक्ष्णं
चित्तं प्रसन्नमतिमात्रमिहापि जातम् ॥ १ ॥

निसर्गरमणीयो लोककोलाहलरहितश्च भूभागोऽयम् । अत एव सत्पुरुष-निवासयोग्यः ।

ग्रामस्थः—देव,सुखदरूपमिदं निसर्गप्रदेशस्य । अन्यतरत्तु दुःखदं विद्यते । यतः किल—

व्याघ्राश्चरन्ति कान्तारे व्यालाश्च तृणभूमिषु ।
ऋक्षा वृका अतिक्रूरा भीषयन्ति च मानवान् ॥ २ ॥

शिवनृपः—युक्तम् । सांसारिकाणामधिष्ठानमशक्यप्रायमत्र । ( दूरतो विलोक्य ) हन्त भोः, नभस्युद्गच्छति तत्र महाज्योतिः ।

ग्रामस्थः, सैनिकाः—कुत्र । न दृश्यतेऽस्माभिः किमपि ।

शिवनृपः—कथं न भवन्नयनगोचर एतावान् प्रचण्डस्तेजःस्तम्भः ।

ग्रामस्थः, सैनिकः—नाद्यापि तं द्रष्टुं शक्नुमः ।

शिवनृपः—महदाश्चर्यम् । (क्षणं विचार्य) आम्—ज्ञातम् । सद्गुरोः स्वरूपमिदम् । तथाहि—

सर्वंव्यापी विहरति गुरुस्तेजसा व्याप्य विश्वं
ब्रह्मात्मैक्यं स्वनुभवति वै ज्ञानरूपेण साक्षात् ।
कायाक्लिष्टो मनुजनयनैर्दृश्यते प्राकृतोऽसौ
स्वानन्दाब्धौ विलुठति सदा लोककल्याणहेतुः ॥ ३ ॥

ग्रामस्थः—तत्रैव तर्हि समर्थनिवासो भवेत् ।

शिवनृपः—बाढम् । सद्गुरुदर्शनं भविष्यतीति भृशमानन्दितोऽस्मि ।

ग्रामस्थः—देव, दृष्टपूर्वोऽयं प्रदेश इति भवतोक्तम् । किं तद्रहस्यम् ।

शिवनृपः—भद्र, रोमहर्षणा कथाऽसौ । कथयिष्यामि परस्मिन् दिने । भवता वर्तितव्यमस्मत्सन्निधौ । कर्तव्यं च किंचित्स्वराज्यकार्यम् ।

ग्रामस्थः—सेविष्ये भवन्तं यथामति ।

शिवनृपः—हन्त भोः, गिरिगह्वरमुखे शिलायामुपविशति सद्गुरुः ।
(पुरतो भूत्वा प्रणमति)

रामदासः—(हस्तमुद्यम्य) स्वागतं स्वराज्यसंस्थापकस्य शिवनृपस्य ।

शिवनृपः—दिष्टया सद्गुरुचरणदर्शनेन धन्योऽस्मि ।

रामदासः—इदमासनमलंक्रियताम् ।
(उपविशति शिवनृपः) बलवत्क्लेशकरः प्रवासोऽङ्गीकृतो भवता ।

शिवनृपः—सद्गुरो, दिग्विजयार्थं यात्राऽऽवश्यकी भवति । सर्वविश्रुतमेव—

जवेन मार्गाक्रमणं विधेयं
ततोऽपि दुर्गोद्गम एव कार्यः ।
रणे रिपुः संह्रियते प्रसह्य
परिश्रमस्यास्य वयं रसज्ञाः ॥ ४ ॥

रामदासः—साधु । भोः शिवभूप, सुमहत्कार्यं समारब्धं भवता । तेन च जनपदहितं सम्यक् साध्यते । तथाहि—

आक्रान्तो विषयोऽयमुद्धतवरैर्म्लेंच्छैर्महाक्रामकै—
र्धर्मान्धैर्निजलाभलोभवशगैर्मानुष्यमारात्मकैः ।
चातुर्वर्ण्यगता विभेदकलुषा मोहावृता दुर्बला
एतानार्यकुलाश्रितान्समनुयोज्योत्थाप्यतां वैदिकम् ॥ ५ ॥

शिवनृपः—अनुगृहीतोऽस्मि । भवदादेशानुसारेण जनसंघं लोकहितं च साधयितुकामा वयं सर्वे ।

रामदासः—तद्धेतुना हनुमदुपासना पुरुषैः कार्या शरीरसामर्थ्यं च संपादनीयमिति वयमपि प्रवर्तयामः । यतः किल—

विख्यातो वीरभद्रो विहरति विबुधो विग्रहे विश्वकेतु—
विज्ञाने विश्रुतात्मा विलसति भजने रामभक्तिप्रवीणः ।
साम्राज्यब्रह्मचर्ये प्रभवति मुखरोऽनश्वरो निर्जरोऽयं
पुण्यार्थं पूजनीयो हितमतिहनुमान्मानवैर्मोहमुक्त्यै ।। ६ ।।

शिवनृपः—भगवन्, भवद्वाक्यश्रवणेनापि चित्तोत्साहः संजातोऽस्माकम् । तन्महाभागवतस्य हनुमतो दर्शनं कथं भवेत् । सद्गुरो,

महास्पृहा मच्चित्ते द्रष्टुं चिरजीविनं तमुद्भासम् ।
श्रीरामभक्तवीरं महाबलं ज्ञानरूपमुल्लासम् ।। ७ ।।

रामदासः—धैर्यमवलंब्यताम् । भक्तिप्रकर्षात्सर्वमपि साध्यम् । सामान्यतो दुःसहं हनुमद्दर्शनम् । भवतु । मध्याह्नसमयो जातः । सकलातिथिभिर्विश्राम्यतां भोजनादिकं च संपाद्यताम् । ( सर्वे तं नमन्ति ) (" विजयते रघुवीरः समर्थः " इति जयघोषः क्रियते)

(समाप्तः प्रथमः प्रवेशः)

---

## द्वितीयः प्रवेशः

[ श्रीराममन्दिरे पूजासमारंभः । तीर्थंप्रसादो दीयते सर्वेभ्यः । ]

प्र. शिष्यः—भोः शिवराज, इदं श्रीरामपादोदकं गृह्यताम् ।
शिवनृपः—ओम् । (तीर्थप्राशनं करोति) अनुगृहीतोऽस्मि ।
प्र. शिष्यः—अयं प्रसादोऽपि स्वीक्रियतां भक्तियुक्तचेतसा ।
शिवनृपः—बाढम् । (प्रसादं स्वीकरोति) महानयं प्रसादः ।

प्र. शिष्यः—सर्वाणि भोजनपात्राणि तत्र दक्षिणकक्षायां विरचितानि । अयं कुमारो भवन्तं तत्र नेष्यति ।

शिवनृपः—परं सद्गुरुः कुत्र भुङ्क्ते ।

प्र. शिष्यः—मन्दिरान्तर्गृहे ।

शिवनृपः—न सर्वेषां समागमे ।

प्र. शिष्यः—न कदापि ।

शिवनृपः—गुर्वाज्ञां ग्रहीतुमिच्छामि भोजनार्थम् ।

प्र. शिष्यः—तीर्थप्रसादस्वीकार एव गुर्वाज्ञा ज्ञातव्या ।

शिवनृपः—तथा । कस्तिष्ठति सद्गुरुसन्निधौ भोजनसमये ।

प्र. शिष्यः—न कोऽपि मानवः । श्रीरामस्य नैवेद्यपात्रे सद्गुरुर्भोजनं करोति श्रीरामसन्निधौ च । एषैव परिपाटिः ।

शिवनृपः—साधु । नास्मि परिचितोऽत्रस्थव्यवहारस्य । तेनैव मज्जिज्ञासा ।

प्र. शिष्यः—भवतु । मन्दिरद्वाराणि पिदधामि । भवाननुसरतु कुमारं तेन मार्गेण ।

शिवनृपः—एवं करोमि । (तथा करोति । प्रथमशिष्यो मन्दिरद्वाराणि पिधायान्यतरेण मार्गेण निष्क्रामति अचिरेण शिवनृपः प्रत्यागच्छति ।)

शिवनृपः—किमिति सद्गुर्भुङ्क्ते रहसि । असामान्योऽयं व्यवहारः । महती जिज्ञासा मन्मसि । तथाहि—

यज्ञोऽस्ति भोजनमिति श्रुतमेव धर्मे
शिष्यैः समं गुरुवरस्य न भोजनं किम् ।
कच्चिद्ग्रघूत्तमसदृैव भुनक्ति कामं
कच्चित्समाधिसुखतो न भुनक्ति किंचित् ॥ ८ ॥

द्रष्टुमिच्छामि निभृतम् । न कोऽपि शिष्यो विद्यतेऽत्र । मन्दिरद्वारं पिनद्धम् । कुत्रापि भवेच्छिद्रं यस्मादन्तस्थदर्शनं स्यात् । ( द्वारसमीपं गच्छति । पुनरपि दूरं प्रयाति ) अयुक्तमिदम् ।

प्रच्छन्नकार्यं न हितावहं स्याद्
आचार्यवाक्यं न विचारणीयम् ।
नूत्नोऽस्मि शिष्यस्य विधानयोगे
श्रद्धालुना भाव्यमितो मया वै ॥ ९ ॥

( परिक्रामति । विचारमग्नो भवति । )

गुरुशिष्यौ मतावेकरूपौ। का हानिस्तर्हि शिष्यस्य गुरुदर्शने। पश्यामि द्वारच्छिद्रेण। ( सनिश्चयं द्वारसमीपं गच्छति। छिद्रे यावन्नेत्रं नियोजयति तावदेव विसंज्ञो भूम्यां पतति। शिष्या आयान्ति। शिवनृपं च शाययन्ति मञ्चके। )

रामदासः—( मन्दिराद्बहिरागत्य ) किमर्थमेष कोलाहलः।

प्र० शिष्यः—शिवनृपो लुप्तचैतन्यः पतितः।

रामदासः—एवम्। दूरमपसरत सर्वे।

( सर्वे तथा कुर्वन्ति। रामदासः स्नेहपूर्णदृष्ट्या शिवनृपमवलोकयति। )

शिवनृपः—( सहसोत्थाय ) किमिति मञ्चके स्थितोऽस्मि। भोः सद्गुरो, अभिवादये भवन्तम्। ( प्रणमति )

रामदासः—तत्रैव स्थीयताम्। कच्चित्प्रकृतिस्थोऽधुना भवान्।

शिवनृपः—सर्वथा स्वस्थोऽहम्।

( ततः प्रविशन्ति चत्वारो वैदिकब्राह्मणाः। " अहं प्रथमं पठामि। "—" अग्रिम ऋग्वेदः। " " नहि, नहि। आद्यो यजुर्वेदः "—" सामवेदः सर्वोत्तमः "—" अथर्ववेदस्य माहात्म्यं व्यवहारे समधिकम् "—इति तेषां विवादः श्रूयते। )

प्र० ब्राह्मणः—भोः सद्गुरो, निर्णीयतां विवादोऽस्माकम्।

रामदासः—भूदेवाः, आसनान्यलंक्रियन्ताम्। ( ब्राह्मणा उपविशन्ति ) किं स्वरूपो विवादोऽत्रभवताम्।

द्वि० ब्राह्मणः—वेदपठने कस्याग्रिमक्रमो वेदेषु चतुर्षु। प्राचीनपरिपाट्या वयमृग्वेदं पठामः प्रथमं तदनन्तरं यजुर्वेदसामवेदाथर्ववेदानां क्रमः। परमत्रस्था इमे वैदिका न संमन्यन्ते पुरातनव्यवस्थामिमाम्।

रामदासः—भोः पण्डिताः, यस्य निःश्वसितं वेदाः सोऽनाद्यनन्तः परमात्मा सर्वेषां मान्यो न वा।

ब्राह्मणाः—ओम्। सर्वथा मान्यः।

रामदासः—तेन हि सुकरो निर्णयः–प्राक्तनी परंपरा सर्वथाऽनुकरणीया। तथाहि–

द्वैतं विवादपदमेव सदा विभाति
अद्वैतमेव परमात्मपदं हि नित्यम्।
संत्यज्य दर्पमिह वर्तनमात्मकार्यं
कुर्याच्च सत्कृतिभिर्जगदादिजो वै ॥ १० ॥

अन्यच्च—श्रीमद्भगवद्गीतासु यदुक्तम्—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ११ ॥

तदनुसारेण व्यवहर्तव्यम् । अनाद्यनन्तकालेऽस्मिन् क आदिमः कश्च द्वितीयः ।

अहंकारो मूलं सकलकलहस्यापि जगति
द्वितीया स्वार्थेच्छा गुणवरगणानां क्षयकरी ।
विहायैतद्द्वन्द्वं व्यवहरति विद्वान् विनयवान्
तदीया सिद्धिः स्यात्सुखमतुलनीयं च सततम् ॥ १२ ॥

ब्राह्मणाः—अनुगृहीताः स्मः—अनुगृहीताः स्म एतेन सद्गुरुवचनेन ।

रामदासः—परमात्मनः प्रपंचोऽयम्—इति बुध्वा सर्वाणि कर्माणि तस्मै समर्पणीयानि । कर्तव्यसमये च सर्वैः सह तथा वर्तितव्यं यथाऽऽत्मनि । उक्तं च—

व्यवहारः सविज्ञानः कार्योऽत्र विमलात्मना ।
मानुष्यधर्म एवेह पाल्यो हितकरो महान् ॥ १३ ॥

ब्राह्मणाः—सद्गुरुवाक्यं प्रमाणम्—सद्गुरुवाक्यं प्रमाणम् ।

रामदासः—पूर्वसूरिभिर्नीतिशास्त्रं विरचितम् । तदनुरोधेन यदि सर्वे मानवा वर्तेरन् तर्हि न कोऽपि प्रत्यूहो वा कलहो वा जायेत । "तस्माच्छास्त्रं प्रमाणं स्यात्" इति यदुच्यते तत् कल्याणकरम् ।

ब्राह्मणाः—विजयते रघुवीरः समर्थः—विजयते रघुवीरः समर्थः ।

( समाप्तो द्वितीयः प्रवेशः )

---

## तृतीयः प्रवेशः

[ गिरिगव्हरे शिष्यसेव्यमानो रामदासः शिवनृपश्च ]

रामदासः—भोः शिवराज, किमाह महाभागवतस्तुकारामो भवन्तम् ।

शिवनृपः—प्रथमतस्तावन्मयोपहारीकृता वस्त्रालंकारास्तेन निर्यातिताः । तदा मया चिन्तितम्—

सामान्या गृहमेधिनो धननिधिं गृह्णन्ति लोभातितः
श्रेष्ठानां स्पृहयन्ति संगमवरायोत्साहवृत्त्या भृशम् ।
सोऽयं भागवतो विरक्ततम उत्तंसस्तु निष्ठावतां
साम्राज्ये विलसत्यहो भगवतो भक्तेश्च सिंहासने ॥१४॥

( रामदासो नेत्रे निमील्यैकतानतया शृणोति )

भगवन्, ततश्च विस्मयान्वितोऽहं प्रयातस्तद्दर्शनाय ।

रामदासः——कुत्रासादितः स विठ्ठलभक्तो भवता ।

शिवनृपः——इन्द्रायणीतटे विठ्ठलनामसंकीर्तनरतो नृत्यन्नासीत् तुकारामभक्तराजः । तदानीम्—

वीणानिनादमतिमञ्जुलताललनादं
श्रुत्वाऽभवं मनसि मोदभरेण पूर्णम् ।
नत्वा तदीयपदपंकजमाप्तमासीत्
सौख्यं दिविष्ठमिह मे खलु भाग्ययोगात् ॥१५॥

रामदासः——साधु, शिवराज, साधु । अनेन निवेदनेन न केवलं विठ्ठलभक्तस्य माहात्म्यं वर्णितं परं भवतोऽपि । यतः किल—

सद्वृत्ता ये गुणगणयुता दुष्टमार्गान्निवृत्ता
लोकानां ये हितमिह सदा साधयन्ति प्रसक्तम् ।
तत्संयोगो जगति सुखदो विष्णुभक्तेन सार्धं
सद्भिः संगो भवति हि सतां पुण्ययोगेन नित्यम् ॥१६॥

शिवनृपः——भगवन्, न जाने किं क्रियते मया—पुण्यं वा पापं वा । मात्रादिष्टः कोंडदेवगुरुप्रवर्तितश्च करोम्यहं यद्यत्समुत्पद्यते चित्ते । स्वराज्यव्यवहारे स्वधर्मीया अपि हन्तव्या भवन्ति कदाचित् ।

रामदासः——कथमिव ।

शिवनृपः——यवनसंगात् किंच यवनादेशात् केचन स्वधर्मीयाः प्रतिष्ठापन्ना भवन्ति । ततश्चोपद्रवन्ति स्वजातीयान् । दण्डार्हास्ते भवन्तीति मन्ये ।

रामदासः——बाढम् । केवलं जन्मनैव स्वधर्मीया वा स्वजातीया वेति न निर्धार्यन्ते जनाः । परं तेषामाचारः परीक्षणीयः । उक्तं च पूर्वसूरिभिः—" जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते " इत्येव ।

उत्पत्तियोगाद्भवति स्वजातिः
स्वाचारतः शीलमभिश्रुतं स्यात् ।
शीलेन मानुष्यमिहाधिगम्यं
शीलेन हीनाः पशुभिः समानाः ।।१७।।

शिवनृपः--तादृश एव नरपशुरभूज्जावलीदुर्गे । तेन सार्धं संधातुं मया प्रयत्नः कृतः । परं मत्सन्देशोऽपि न वाचितस्तेन । किंच मत्सन्देशवाहकौ निःसारितौ सदर्पम् । .

रामदासः--ततस्ततः ।

शिवनृपः--तदनन्तरं निखिलप्रवृत्तिमुपलभ्य संभारसिद्धतां च संपाद्य स्वराज्यशूरैराक्रान्तः स दुर्गः । तथाहि--

प्रभातेऽधिरुह्यातिवेगेन दुर्गं
रणाग्रे हतश्चन्द्ररायः ससैन्यः ।
विजापूरभूपस्य योधाः प्रचण्डाः
शयना अकस्माच्च दीर्णाः प्रवीरैः ।।१८।।

रामदासः--साधु । तज्जनपदस्य शासने के नियुक्ताः ।

शिवनृपः--चन्द्ररायपुत्रोऽभिषिक्तोऽस्ति सिंहासने । स च प्रवर्तयते राज्यव्यवहारमस्मत्प्रतिनिधिनीत्या ।

रामदासः--दिष्टया मात्रादिष्टो भवान् । कोंडदेवेन तुकारामेण च सुविनीतः । किमन्यदिष्यतेऽतःपरम् ।

शिवनृपः--सद्गुरो, तुकारामभक्तराजेन किंचिदपि नोपादिष्टम् । तेन कथितम्-

कृष्णातीरे निवसति गुरुस्त्वन्नियन्ता समर्थः
साक्षाद्धर्मोऽवतरति तदीयेन रूपेण भूम्याम् ।
सीतारामं भजति हनुमान्ब्रह्मदेहाश्रितोऽयं
तत्पादाब्जे त्यज निजतनुं भक्तिभावेन शीघ्रम् ।।१९।।

ततोऽहमायातोऽत्रभवत्पादमूलम् ।

रामदासः--भोः शिवराज, महान्कार्यव्यूहो विरचितोऽस्ति भवता । तदर्थं बलवती चमूर्महान्द्रव्यनिधिश्चावश्यकः । स्वधर्मीयाः संपरीक्ष्य संग्राह्याः स्वराज्यकार्ये । तथाहि--

आलोडने प्रभव एव बलस्य नूनं
उद्योगिना नरवरेण सदैव भाव्यम् ।
विश्वेश्वरे सुदृढभाव इतोऽप्यवश्यः
सिद्धिस्तदीयकृपया भवतीह लभ्या ॥२०॥

शिवनृपः—ईश्वरभक्तिः सत्प्रवृत्तिश्च परस्परावलंबिन्यौ— इति मे मतिः ।

रामदासः—न केवलं परस्परावलंबिन्यौ किंतु परमेशस्य द्वौ भुजौ–इति मन्तव्यम् । सत्प्रवृत्ता एव सजातीयाः समाधातव्याः । अन्यथा ते भवन्ति विनाशहेतवः । अतोऽहं ब्रवीमि—

संग्राह्याः सबलाः स्वधर्मनिरताः शुद्धात्मभावान्विताः
सन्निष्ठा नृपतौ तथा च सुकृतौ तेषामपेक्षिष्यते ।
धर्मोत्साह उदात्तबुद्धिरपि संपोष्यौ महायत्नतः
स्वार्थं चापि परार्थमुत्तमगुणाः संपादयन्त्यञ्जसा ॥२१॥

शिवनृपः—भगवन्, अनुगृहीतोऽस्मि वचनैतेन । को देवो भवेत्सिद्धिदः स्वराज्यकार्ये—श्रीरामो वा श्रीकृष्णो वा ।

रामदासः—भोः शिवराज, परमार्थतः सर्वव्यापी सर्वसाक्षी सर्वज्ञश्चैक एवाद्वितीयो देवः । स्वप्रकृतिं सम्यग् विचार्य मनुजेनोपासनीयः सगुणरूपः कोऽपि । इदं तावत्सुव्यक्तं ज्ञातव्यम्—

प्रयत्न एवात्र विधेय उग्रः
उपास्यदेवो ननु यत्नतोषः ।
विहाय कार्यं यदि सिद्धिमिच्छेत्
प्रणष्टमेवेह पदं तदीयम् ॥२२॥

शिवनृपः—चन्द्ररायमृत्युना विजापुराधीशः क्रुध्यादाक्रमणं च कुर्यादस्मिन्प्रदेशे । तस्माद्दक्षिणविभागेऽस्मत्सेनाधिकारिणः स्थापनीयाः स्थाने स्थाने । तदर्थं श्वस्तने दिने प्रयास्यामि दक्षिणमार्गेण ।

रामदासः—साधु । वयमपि यास्यामो भवता सह कऱ्हाडग्रामपर्यंतम् । तत्रस्थमठपरीक्षणं च करिष्यामः ।

शिवनृपः—अधुना भवत्पादपूजा विधेया मया ।

(सचिवः सेवकाश्च पूजासाहित्यमानयन्ति शिवनृपो रामदासाय समर्पयति महावस्त्रादीन् । सर्वं च रामदासः प्रत्यर्पयति शिवनृपाय ।)

रामदासः—विषादं मा कार्षीः । एतादृशी जीवनयात्राऽस्माकम् । तथाहि—

भैक्ष्यं सदाऽशनमिहास्ति पटं कषायं
कोशः कदापि करणीय इतो न कामम् ।
धर्मेण वर्तनमथापि समाजकार्यं
ब्रह्मार्पणेन विधिना किल साधयामः ॥२३॥

॥ विजयते रघुवीरः समर्थः ॥

( तृतीयः प्रवेशः समाप्तः )

— ० —

## चतुर्थः प्रवेशः

[ रामदाससांप्रदायिकौ द्वौ बालकौ भिक्षाचर्यां कुर्वाते ]

बालकौ—विजयते रघुवीरः समर्थः । विजयते रघुवीरः समर्थः ।

मनः सौम्य हे भक्तिमार्गेण याहि
ततः श्रीहरिस्तोषमेति स्वभावात् ।
जनानां यथा निंद्यमेवेह हेयं
जनानां यथा वंद्यमेवेह कार्यम् ॥२४॥

विजयते रघुवीरः समर्थः । विजयते रघुवीरः समर्थः । भगवति भिक्षां देहि।

(ततः प्रविशति काचित् स्त्री । भिक्षां ददाति च)

स्त्री—अये रामलक्ष्मणवत् बालकौ दृश्येते । आयुष्मन्तौ भवतम् ।

बालकौ—विजयते रघुवीरः समर्थः ।

(अग्रतो गच्छतः)

विजयते रघुवीरः समर्थः

मनो वासना दुष्टरूपा न कार्या
मनो बुद्धिपापीयसीं भो जहाहि ।
मनो नीतिमार्गं निरन्तं भजस्व
मनो निर्मलं वै विवेकं गृहाण ॥२५॥

विजयते रघुवीरः समर्थः। भगवति भिक्षां देहि।

(ततः प्रविशति क्रुद्धा स्त्री)

द्वि० स्त्री—अरेरे दग्धमुखौ, किमर्थं याच्यते भिक्षा। अपेतम्—नोचेत्काष्ठेन ताडयामि वाम्।

(बालकौ प्रधावतः सुदूरम्)

कनीयान्बालकः—(सहासम्) चण्डिका वा राक्षसी वाऽसौ। हन्तुं—

ज्यायान्बालकः—अलं परुषोक्त्या। स्मर्यतां गुरूपदेशः।

कनीयान्बालकः—ओम्।

(अग्रतः परिक्रामतः)

बालकौ—विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः।

मनः कामरोगं त्यजेर्नैकरूपं
मनः क्रोधशत्रुं जहि स्वास्थ्यनाशम्।
मनो लोभबुद्धिर्न सेव्या सबाधा
मनो मत्सरं मा भज व्यर्थदम्भम्॥ २६॥

विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः। भगवति भिक्षां देहि।
(ततः प्रविशति पुरुषो ददाति च भिक्षाम्)

पुरुषः—न भगवती काऽपि गृहेऽस्मिन्। भगवानेवाहं भिक्षां ददामि।

बालकौ—विजयते रघुवीरः समर्थः।

पुरुषः—हे बालकौ, किं किं क्रियते सर्वैर्बालकैर्मठे।

ज्या० बालकः—सुप्रभाते समुत्थाय स्नानादिकं च समाप्य वयं वेदपठनं शास्त्राध्ययनं च कुर्महे। ततो दुग्धं पीत्वा भिक्षार्थं ग्रामभागेषु व्रजामः। मध्याह्ने भोजनं कृत्वा कंचित्कालं विश्रम्य पुनरपि वेदपठनं शास्त्राध्ययनं च कुर्महे। सायंकाले गोसेवा क्षेत्रकर्म च कर्तव्यम्। रात्रौ हनुमत्पूजां स्तोत्रपाठं च सर्वे मिलित्वाऽनु तिष्ठिन्ति। भोजनानन्तरं निद्रासुखमनुभूयते।

पुरुषः—साधु। मन्दालकौ भ्रमन्तीतस्ततः। स्वीकारिष्यति किं तौ भवद्गुरुः।

ज्या० बालकः—अवश्यम्। आगच्छतु भवान् गुरुदेवं द्रष्टुम्।

पुरुषः—एवं करिष्यामि। (निष्क्रान्तः)



कनी० बालकः—(सोद्वेगम्) नेष्यते कलहकारणमेतत्।

ज्या० बालकः—ननु मूढ, सर्वेऽपि न त्वादृशाः सन्ति विवादशीलाः ।

(ततः प्रविशति खञ्जो याचकः)

याचकः—अरेरे शुनकौ, कुत्र नीयते मदीयांशः ।

बालकौ—कथं, कथं त्वदीयांशः ।

याचकः—अस्मद्व्यवसायो याचनवृत्तिः । ब्रह्मवंशजाभ्यां युवाभ्यां किमर्थं भिक्षाटनं क्रियते ।

ज्या० बालकः—अस्मद्गुरूपदेशोऽयम् । न विचारणीयोऽसौ त्वया ।

याचकः—(सावेशम्) रे शिष्यहतक, गतं गतो गुरुः । दीयतामखिलो भिक्षार्थः । नोचेद्धन्तव्योऽसि लगुडेन (लगुडं घूर्णयति) (कनीयान्बालको भीतभीतः परं ज्यायान्बालकः सधैर्यं स्वदण्डात्खड्गमाकर्षति)

ज्या० बालकः—(संरंभेण) रे खञ्ज, पश्येमं खड्गम् । एकेन पादेन खञ्जस्त्वम् । द्वितीयमपि खण्डयामि क्षणात् । किमुच्यते रे शठ । (बालकस्य क्रोधावेशं दृष्ट्वा पलायते शीघ्रं खञ्जयाचकः । बालकौ मठं निवर्तेते । केचिद्बालका अध्ययनमग्ना उपविष्टाः ।)

प्र० बालकः—किमर्थमेते दशगणा व्याकरणे कल्पिताः । एकैव बुद्धिर्मदीया ।

द्वि० बालकः—रे मन्दमते, तूष्णीं पठ यत्किमपि गुरुदेवेन निवेदितम् ।

प्र० बालकः—अनध्यायोऽद्य भवेदिति मन्ये ।

द्वि० बालकः—किमर्थम् ।

प्र० बालकः—महान्तोऽतिथय आगता मठम् ।

द्वि० बालकः—आचार्यादेशं विना न केनापि गन्तव्यं बहिः । सावधानं पठत ।

तृ० बालकः—ममावधानं तावद्गतं महानसं प्रति ।

च० बालकः—कस्मात्कारणात् ।

तृ० बालक—न जानासि किम् । मिष्टान्नं पच्यते तत्र । (सर्वे हसन्ति)

द्वि० बालकः—धिक् प्रहसनम् । तूष्णीं पठयन्तां पाठाः । तूष्णीं पठयन्तां पाठाः ।

(ततः प्रविशतोः भिक्षापुटे धारयन्तौ बालकौ । )

द्वि० बालकः—किमिति चिरायितं युवाभ्याम् । कच्चित्प्रत्यूहोऽभून्मार्गे ।

ज्या० बालकः—एवमेव ।

प्र० बालकः—हन्त भोः, दीर्घकूर्चा अतिथयः समागता मठम् ।

तृ० बालकः—मन्येऽप्येको विद्यते तेषु महामल्लः ।

द्वि० बालकः—ननु मूढ, नासौ यवनः। शिवराजोऽयं स्वराज्यसंस्थापकः।

इतरे बालकाः—(साश्चर्यम्) हन्त भोः।

प्र० बालकः—यदि हिंदुधर्मीयोऽयं तर्हि किमर्थं कृष्णकूर्चं धारयते।

द्वि० बालकः—नैषा चिकित्सा कार्या छात्रैः। यथा "आज्ञा गुरूणां ह्यविचारणीया" तथैव वेषोऽतिथीनां न विचारणीयः। (सर्वे बालका हसन्ति)

द्वि० बालकः—मा खलु विहस्य। तूष्णीं पठ्यन्तां पाठाः।

केचिद्बालकाः—भोजनवेला संजाता। भोजनवेला संजाता।

द्वि० बालकः—नहि, नहि। विपुलावधिरद्यापि। (भोजनस्य घण्टानादः श्रूयते)

सर्वे बालकः—हन्त भोः। भोजनवेला-भोजनवेला संजाता। भोजनवेला संजाता।

द्वि० बालकः—उत्तिष्ठत। वदत सर्वे—विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः। (निष्क्रान्ताः सर्वे बालकाः)

(ततः प्रविशतो रामदासशिवनृपौ मठपतिनाऽनुगतौ।)

शिवनृपः—मठगतं दिनक्रमं समीक्ष्य भृशं प्रमुदितोऽहम्।

मठपतिः—(सविनयम्) समर्थादेशं यथामति वयमनुतिष्ठामः।

शिवनृपः—कस्मिकार्ये रमन्ते बालकाः सविशेषम्।

मठपतिः—हनुमतः स्तोत्रपठनं तेषां प्रमोदाय भवति। व्यायामे मल्लविद्याऽपि बहुमता तेषाम्।

शिवनृपः—(बालकं प्रति) भो बाल, पठ्यतां श्लोकः।

प्र० बालकः—ओम्—

मनः श्रेष्ठधैर्यं सदा धारणीयं
मनः कुत्सवाक्यं च शान्तं विषघ्नम्।
मनः सौम्यशब्दः स्वयं नम्रवाच्यो
मनः सर्वलोकः सयत्नं प्रसाद्यः॥ २७॥

विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः।

शिवनृपः—साधु। (अन्यं बालकं प्रति) त्वमपि पठसि किं श्लोकमेकम्।

प्र० बालकः—अथ किम्, देव—

सदा सर्वतः सन्निधौ दक्षदेवः
कृपालुः स नो वीक्षते धर्मवर्यम्।
यदीया च लीला त्रिलोक्यां प्रशस्या
उपेक्षां विधत्ते न दासाभिमानी॥ २८॥

विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः।

शिवनृपः--(बालकाभ्यां ददाति पारितोषिके) कति धेनवः पाल्यन्ते मठे।

मठपतिः—दश धेनवः षड्वत्साश्च सन्ति। क्षेत्रे चत्वारो वृषभा अपि वर्तन्ते।

शिवनृपः—के कुर्वन्ति क्षेत्रकार्यम्।

मठपतिः—सामान्यतो वह्वंशेन मठवासिनोऽनुतिष्ठन्ति कृषिकर्माणि। कदाचिद् ग्रामवासिनः क्षेत्रपालाः कुर्वन्ति साहाय्यमस्माकम्।

शिवनृपः—कच्चिदुपद्रवो जायते दुर्जनेभ्यो वा तस्करेभ्यो वा।

मठपतिः--न कदापि। दीनेभ्यः साहाय्यं प्रयच्छामो यथासमयम्। व्याधितेभ्यश्च भेषजानि यथामति। तेन हि सर्वे प्रातिवेशिकाः स्नेहभावेनास्मासु वर्तन्ते।

शिवनृपः—भेषजान्यपि दीयन्ते भवद्भिः किम्।

मठपतिः—अथ किम्, देव। वनस्पतिभ्यो बहूनि भेषजानि विनाऽऽयासमुत्पाद्यन्ते मठेऽस्मिन्। कानिचिद्रसायनान्यपि प्रकल्पयामोऽत्र।

शिवनृपः—एतत्कार्यं लोकहिताय भवति। तेन च लोकसंग्रहः साध्यते। स खलु स्वराज्याधार इति मन्यामहे। तथाहि—

बहुजनहितसाध्यं यत्नतः स्नेहतश्च<br>सकलहृदयतोषो विश्वपालस्य तोषः।<br>परिसरणसहायो भाति नैसर्गिकोऽपि<br>तदनु सुफलभाग्यं प्राप्नुते कार्यकर्ता॥ २९॥

मठपतिः--देव, सकलमेतत्समर्थयोजनाफलम्। निमित्तमात्रं खलु वयम्।

रामदासः—भवतु। मल्लविद्याभ्यासः कथमनुष्ठीयते तदधुना द्रष्टुकामा वयम्।

मठपतिः--भगवन्, इत इत आगम्यताम्। (सर्वे परिक्रामन्ति)

(चत्वरे केचित्प्रौढाः केचित्कुमाराश्च मल्लविद्यामभ्यस्यन्ति)

मठपतिः--भगवन्, इमे मठवासिनः। एते च ग्रामवासिनः। अयं ग्रामस्थो मुखरो बालकान्सर्वान् शिक्षयति मल्लक्रीडाम्।

शिवनृपः--साधु। भद्र, को व्यवसायस्तव।

ग्रामस्थः—देव, कृषकोऽहम्। कदाचित्करोमि शाकटिकस्यापि व्यापारम्।

शिवनृपः--अपि क्षात्रवृत्तिमाचरितुमिच्छसि।

ग्रामस्थः--अकाण्डे कथनं न शक्यम्। देव, क्षम्यताम्। पित्रनुज्ञां गृहीत्वा निवेदयिष्यामि।

शिवनृपः--एवं क्रियताम् । ये केचन युवानः शस्त्राजीवमाचरितुकामा विद्यन्ते तेषां नामानि निवेद्यन्तां मठपतये ।

ग्रामस्थः--एवं करिष्यामि ।

( कुमाराणां मल्लक्रीडां पश्यन्ति सर्वे )

शिवनृपः--( करतालं दत्वा ) वलवान् पादोल्लासोऽयम् ।

( अन्यः कोऽपि मल्लो जंघाग्राहं प्रमाणयति )

शिवनृपः—( करतालं दत्वा) चपलोऽयं वालो जंघाग्राहं दर्शयति । युक्तिः शक्तेर्वलीयसी ।

( अपरौ बाहुयोधौ भुजमोटनं देहघूर्णनं च प्रतिपादयन्ति । )

शिवनृपः—( करतालं दत्वा ) उभावपि तुल्यबलौ मल्लौ ।

रामदासः—वाढम् । परिश्रान्ता दृश्यन्ते सकलाः ।

शिवनृपः---आम् । मल्लेभ्यः पारितोषिकाणि दातुमिच्छामि । ( तथा करोति )

रामदासः—भोः प्रियबालाः, "शरीरमाद्यं खलु सर्वसाधनम्" इति धर्मगुरुभिरुपदिष्टम् । तथापि शक्तिः स्वजनपीडनाय माभूत् । तथाहि—

संघातो बलवुद्धिर्दैवगुणतो बोभूयते सिद्धिदो
देहस्याभिनिवेशतः खलु विवेको दूष्यते सर्वदा ।
मिथ्याविश्वसनं विनाशकमितः संभ्राम्यते सन्मति-
स्तस्मात्साधु विचिन्त्य राष्ट्रघटना संसाध्यतां साध्यताम् ॥३०॥

विजयते रघवीरः समर्थः । विजयते रघुवीरः समर्थः ।

( समाप्तश्चतुर्थः प्रवेशः—तृतीयोऽङ्कश्च समाप्तः )



# चतुर्थोऽङ्कः

## प्रथमः प्रवेशः

[ द्वौ सैनिकौ शैलप्रदेशे पर्यटतः सहेतुकम् । ]

प्र० सैनिकः—वयस्य रम्योऽयं गिरिनितंबः । तथाहि

हरितवसनो भूभागोऽयं विलोकनसौख्यदः
पवनगतिना स्पर्शोत्साहो भृशं स्वनुभूयते ।
खगकुलरवैः श्रोत्रातृप्तिः प्रतिक्षणमेधते
द्रुमसुमनजो गन्धो घ्राणं प्रतर्पयतेतराम् ।। १ ।।

किं मन्यसे त्वम् ।

द्वि० सैनिकः—नेदं भवति मम प्रीतये । लोकसंकुलालयविभागे भ्रमणाय स्पृहयामि । यतः किल तत्र वन्यपशूनामागमो न शक्यः । कोऽपि लाभश्च संभवति जनसंपर्कात् ।

प्र० सैनिकः—स्वराज्यसैनिको भूत्वा बिभेषि किं हिंस्रश्वापदेभ्यः ।

द्वि. सैनिकः—नहि, नहि । संकटावाहनं नेष्टम् । इति मे मतिः ।

प्र० सैनिकः—प्रभाते दक्षिणभुजस्फुरणमनुभूतं मया ।

द्वि० सैनिकः—ततः किं तर्कितम् ।

प्र० सैनिकः—कोऽपि विक्रमप्रसंगः समुत्पद्येत । इति मन्ये ।

द्वि. सैनिकः—न मे विश्वासोऽदृष्टलक्षणेषु । उक्तं च–

अदृष्टं नैव सत्यं स्यात् संभ्रमो हानिकारकः ।
प्रयत्नावसरो यत्र सत्या सृष्टिः सुखावहा ।।२।।

प्र. सैनिकः—पश्य, तत्रोन्नतप्रदेशे कश्चित्पथिको दृश्यते ।

द्वि० सैनिकः—बाढम् । एतद्गुल्मपृष्ठत आत्मानं गोपयावः । ततश्च पश्यावः स्वकीयो वा परकीयो वेति ।

प्र० सैनिकः—किमर्थमेतादृशी प्रच्छन्नता । तत्संमुखमेव प्रयावः ।

द्वि. सैनिकः—तथा । आवां सशस्त्रौ । पथिकश्चैकाकी । खड्गमुत्कर्षामि ।

प्र० सैनिकः—किं प्रयोजनं खड्गेन। आवां शूलहस्तौ। न किमपि कर्तुं शक्नोति स शूलाघातान् परिहृत्य।

द्वि० सैनिकः—जात्या म्लेंछोऽस्ति पथिकः। पश्यामि तस्य दीर्घकूर्चम्।

प्र० सैनिकः—तस्य हस्ते यष्टिः स्कन्धे च स्तोकं पुटं विद्यते।

द्वि० सैनिकः—मार्गं विसृज्य वामतो गच्छति सः। परिहर्तुं यततेऽस्मद्दर्शनम्।

प्र० सैनिकः—रे पथिक, तिष्ठ, मा गच्छ उत्पथम्।

(पथिकः पलायितुं यतते। ततस्ताभ्यां निरुध्यते स लीलया।)

द्वि० सैनिकः—कस्त्वम्। कुत आयातः।

(पथिको मूकभावं नाटयति)

प्र० सैनिकः—(तत्पुटं गृहीत्वा) किमेतत्, रे शठ।

द्वि० सैनिकः—अलंकारमंजूषेयं मुषिता किं धनिकगृहात्।

(पथिको हस्तेन दर्शयति किमपि)

प्र० सैनिकः—सुवर्णनाणकान्यपि वर्तन्ते मञ्जूषायाम्।

द्वि० सैनिकः—नूनं तस्करोऽयं दण्डार्हः।

(पथिकं मुष्टचा ताडयति)

प्र० सैनिकः—नहि, नहि। महापण्डितोऽयं दृश्यते कूर्चधारी। (कूर्चं हस्तेन धृत्वा) ततः कस्मादपि गृहमेधिनः प्राप्तवानिमां दक्षिणाम्। (हसति)

(पथिको हस्तौ चालयति)

द्वि० सैनिकः—सचिवं प्रति नेतव्योऽयम्।

प्र० सैनिकः—बाढम्। महामूल्येयं मंजूषा। सचिवहस्ते विस्रष्टव्या भवति। नृपधनमेवेदं यदकस्मात्संप्राप्तं नियोगव्यवहारे। तथाहि–

आचारसंहितेयं परधनहरणं न युक्तमस्माकम्।
स्वराज्यशासनमेतत्पाल्यं रक्षानरैः सदा सूक्ष्मम् ॥३॥

द्वि० सैनिकः—अन्यच्च। विजातीयोऽयं पथिकः। अस्माल्लब्धव्या कापि वार्ता यदुपयोगो भवेत्स्वराज्यप्रवर्तने। उक्तं च

चारचक्षुर्महीपालो वर्ण्यते पूर्वसूरिभिः।
प्रवृत्तिः स्वल्पमात्रापि युज्यते राज्यशासने ॥४॥

प्र० सैनिकः—एनं नयावः सचिवं प्रति। कथयावश्च निखिलवृत्तान्तम्।

(परिक्रामतः।)

द्वि० सैनिकः—(पथिकं प्रचोदयति) अग्रतश्चर। अग्रतश्चर।

(अबाजी–सोनदेवः सचिवो यवनानां कल्याणकोशं सहसाऽऽक्रम्य गृह्णाति। महत्यो मंजूषाः सुवर्णनाणकपूर्णपुटाश्च दृश्यन्ते।)

सोनदेवसूनुः—कोऽयम्।

प्र० सैनिकः—अयं पथिक आसादितो मार्गे। अस्य पुटे संप्राप्ता मंजूषेयम्।

(पुरतः स्थापयति मंजूषाम्)

सोनदेवसूनुः—कुत्रस्थोऽयम्।

प्र० सैनिकः—न वदति किंचिदपि। जात्या यवनो दृश्यते।

सोनदेवसूनुः—भवतु। स्थाप्यतामयं कारागारे। (इतस्ततः परिक्रम्य) अहो भाग्यं शिवनृपस्य। तथाहि—

सद्यः प्रवृत्तिं सुनिशम्य चाराद्
आक्रान्त एकान्तजवेन कोशः।
म्लेच्छाः पलायन्त भयेन शीघ्रं
लीलाभिलब्धश्च सुवर्णराशिः॥५॥

भोः कोषरक्षकाः सावधनं संरक्ष्यतां द्रव्यसंग्रहोऽयम्। तरुतले कंचित्कालं विश्राम्यते मया।

(ततः प्रविशतो द्वौ वीरौ शहाजादीवन्दिनीमानयन्तौ।

सोनदेवसूनुः— रे वीर, किमेतत्।

प्र० वीरः—सचिव, राजकुलजा यवनीयम्। अस्या रक्षका हता आवाभ्याम्। एषा चानीता भवत्सकाशम्।

द्वि० वीरः—अत्यन्तं रूपवती तरुणीयम्। पलायितुमक्षमा पतिताऽस्मद्धस्ते।

सोनवदेसूनुः—भवतु। न भवेदस्याः कापि पीडा। (तां प्रति)

सुखं विश्राम्यतु भवती पटमण्डपेऽस्मिन्। शिवनृपस्य स्फुटादेशा एतादृशाः—

नार्यां न पीडनमितो भवतु प्रतीपं
बालाः सदैव मृदुना मनसा निरूप्याः।
वृद्धाश्च दुर्गतजना दययाऽनुपाल्या
भद्रं ततो नृपवरस्य शुभोपलंभैः॥६॥

भो महाराष्ट्रवीराः, न कदापि विस्मर्यन्तां शिवनृपादेशा एते । तेनैव सर्वसाक्षी परमात्मा तुष्येत् । स्वराज्योत्कर्षश्च भवेत् ।

सर्वे सैनिकाः—ओम् । विजयोऽस्तु शिवनृपस्य । विजयोऽस्तु शिवनृपस्य ।

सोनदेवसूनुः—रे वीर, समीपस्थात् कृषककोटजाद् आहूयतां काचिद्वनिता । सा कंचित्कालमुपसेवेत शहाजादीम् ।

(वीरो गच्छति समीपस्थं क्षेत्रं प्रति । सेवकाः शहाजाद्याः संभारं पटमण्डपे स्थापयन्ति । )

सोनदेवसूनुः—हे भगिनि, मा व्यथिष्ठाः किंचिदपि ।

आतिथ्यं वै जनपदगुणो विद्यते प्राक्तनोऽत्र
आधिक्यं भोः कुलजमहिला आदरार्हा सदैव ।
अस्मद्धर्मः परमतसहिष्णुत्ववृत्याऽस्ति मान्यः
आदर्शोऽयं विलसतितरां विश्वबन्धुत्वरूपः ॥७॥

(अत्रान्तरे कृषकस्त्री समागच्छति शहाजादीं च नयति पुटमण्डपान्तरम् । )

सोनदेवसूनुः—साधु । उपसेव्यतां शहाजादी सादरम् । (कायस्थं प्रति)भद्र कच्चि परिगणना लिखिता कोषगतपदार्थानाम् ।

कायस्थः—अथ किं, सचिव । स्वनामाङ्कितं क्रियतां पत्रमेतत् ।

सोनदेवसूनुः—एवं करोमि । (पत्रे स्वाक्षरं लिखति) महान्खलु धननिधिः समधिगतोऽद्य ।

कायस्थः—साभिप्रायं संजातं भवदभिधानं समयेऽस्मिन् ।

सोनदेवसूनुः—आम् । नैतत्सर्वदा संभवति । तथाहि–

कदाचिज्जगन्नाथनामा बिभर्ति
शरावं स्वहस्ते सदा भिक्षुवृत्तिः ।
कदाचिच्च लक्ष्मीर्भुजिष्या दरिद्रा
अहो वीरबाहुर्बिभेति श्वशब्दात् ॥ ८ ॥

(सर्वे हसन्ति विनोदमवगम्य)

कायस्थः—अधुना सन्देशः प्रेषणीयः शिवनृपं प्रति ।



सोनदेवसूनुः—अवश्यम् । अश्वारोहो विसृज्येतां सत्वरम् ।

कायस्थः—यथाऽऽज्ञा ।

सोनदेवसूनुः—रक्षकाः सावधानं तिष्ठन्तु । समन्ततश्च निरूपयन्तु । विश्राम्यतेऽधुना मया ।

(समाप्तः प्रथमः प्रवेशः)

---

## द्वितीयः प्रवेशः

(वनराज्यां शिवनृपः परीक्षते कल्याणकोशम् ।)

सोनदेवसूनुः—कः सन्देशः शिवनृपस्य ।

दूतः—सचिव, सद्य एव शिवनृप आयाता ।

सोनदेवसूनुः—भोः सैनिकाः, परिष्क्रियतां पटमण्डपो वृक्षपल्लवैर्लताविताने श्च

सैनिकाः--यथाऽऽज्ञा । (तथा कुर्वन्ति)

सोनदेवसूनुः—भोः सेवकाः खनकाश्च, सकलः परिसरः संमार्ज्यताम् । श्रूयताम्—

संसिच्यतां जलघटैर्धरणी समन्तात्
संबध्यतां वनलतारचिता सुमाला ।
उन्नेष्यतां च ध्वजदण्ड इहैव वृक्षे
उद्घोष्यतां जयरवः खलु तारनादात् ॥९॥

सर्वे सेवकाः—एवं करिष्यामः । .

सोनदेवसूनुः—अहो मे भाग्यं यदद्य मद्विक्रमफलं द्रष्टुमायास्यति शिवनृपः । तथाहि—

स्वराज्यपरिपालकः शिवनृपः समागच्छति
स्वराज्यजनसेवकः प्रभुवरं समापेक्षते ।
महोत्सव इहैव संपतति वै विलासान्वितो
मुदाकुलितमानसः समभवं तदाशंसया ॥१०॥



(निर्गताः सेवका नियोगानुष्ठानार्थम्)

कायस्थः—भोः सचिव, कोशगणनापत्रमिदं भवता स्थापयितव्यं शिवनृपस्य पुरतः ।

सोनदेवसूनुः—एवं करिष्यामि । सैनिकेभ्यः कानिचित्पारितोषिकाणि दातव्यानि ।

कायस्थः—तन्निवेदयिष्यति शिवनृपः स्वयम् ।

सोनदेवसूनुः—यत्किमपि तोरणादुर्गोत्खननाल्लब्धं ततोऽप्यधिकतरं निधानमिदम् । शिवनृपो ज्ञास्यत्येतत्सपदि ।

कायस्थः—भोः सचिव, कथं दर्शनीया सा शहाजादी शिवनृपाय ।

सोनदेवसूनुः—तदेव चिन्तयामि । प्रभुचित्तवृत्ति परीक्ष्य यथासमयं नाट्यप्रशमेव साधायिष्यामि । यतः किल—

जानातु भूपो निजसेवकानां
विक्रान्तविद्यां सुकुलागमार्थाम् ।
कोशावलोकेन च तोषमेतु
स्त्रीरत्नमेतत्तत ईक्षणीयम् ॥११॥

कायस्थः—अंगुलीमुद्धृत्य भवता प्रेरणीयोऽहम् । तदा प्रेषयामि शहाजादीं मण्डपान्तर्भागम् ।

सोनदेवसूनुः—सुष्ठु चिन्तितं त्वया । एवं करिष्यामि । ( शृंगनादः श्रूयते । ) शृंगनादः श्रूयते । शिवनृपः समीपमागत इति मे भाति ।

कायस्थः—सावधाना भवन्तु सर्वे-इति निवेदयामि । (निष्क्रान्तः)

सोनदेवसूनुः—क्रियतामेवम् ।

(ततः प्रविशति शिवनृपः । तं प्रत्युद्गच्छति सोनदेवसूनुः । " विजयोऽस्तु शिवनृपस्य "–" विजयोऽस्तु शिवनृपस्य " इत्युद्घोषः श्रूयते बहुवारम् । )

शिवनृपः—महान् खलु मे प्रमोदो भवतां विक्रमश्रवणेन । (सोनदेवसूनुं प्रति) कति रक्षका आसन् कोशं परितः ।

सोनदेवसूनुः—एकशतमात्रा एव । परं तैर्महद्युद्धमारब्धम् ।

शिवनृपः—ततस्ततः ।

सोनदेवसूनुः—सपदि परिवृतास्ते सर्वेऽस्माभिः । अचिरादेव—

निजघ्नुः पत्तयो म्लेंछान् खड्गाघातैर्विनाशकैः ।
सादिमः सायकैश्चैव [illegible] ॥१२॥



शिवनृपः—न कोऽपि पलायितुं समर्थः ।

सोनदेवसूनुः--अन्ततः केचन पलायन्त स्तोकमन्तरम् । परं ते सर्वे गृहीता ग्रीवा-ग्राहम् । तेभ्यश्च धनमंजूषा अपहृताः । तथाहि--

नैकं मणिं नाणकमेव मोक्तुं
रत्नं तथा भूषणवस्तुजातम् ।
म्लेंछा न शक्ताः परिरक्षितुं वा
वन्दीकृतास्ते निहता उताहो ॥ १३ ॥

शिवनृपः--साधु । कति मंजूषाः प्रसेवाश्च विद्यन्ते कोशेऽस्मिन् ।

सोनदेवसूनुः--इदं परिसंख्यापत्रम् । अधिकारसंग्रहार्थं लिखितम् ।

शिवनृपः--( पत्रलेखं दृष्ट्वा ) महालाभोऽयं युष्माभिरात्मसात्कृतः । ततश्च--

आधारभूतबलधारिण एव यूयं
धन्याः स्वराज्यपरिपालनबद्धचित्ताः ।
शस्त्रास्त्रसंग्रहमतो विदधाम सिद्धं
येनैव दुर्जयचमूर्भविताऽस्मदीया ॥ १४ ॥

( परिक्रामति मंजूषाः प्रसेवानपि निरूपयितुम् । )

हन्त भोः, स्वराज्यमुद्रांकिताः सर्वे कोशविभागाः । अनेन विधिना प्रतिष्ठां प्राप्नोति स्वराज्यव्यवहारः । तथाहि--

एकैकः कार्यकर्ता वै नेतारमनुरुध्यते ।
कणसंघाद्गृहोत्कर्षः संहतिः कार्यसाधिका ॥१५॥

सोनदेवसूनुः--द्वाभ्यां सैनिकाभ्यां यवनपथिक आक्रान्तः । तस्माच्च मंजूषेयमुपलब्धा।

शिवनृपः--अहो क्रियामाधुर्यं मंजूषायाः । ( तामुद्घाट्य ) हन्त भोः, भास्वन्ति रत्नानि विद्यन्तेऽस्यां सुवर्णनिविष्टानि ।

(सोनदेवसूनुरंगुल्या सूचयति कायस्थं शहाजादीं प्रवेशयितुम् । रत्ननिरीक्षणे यावद्व्यापृतः शिवनृपस्तावत्प्रविशति शहाजादी । )

शिवनृपः--( साश्चर्यं शहाजादीं विलोक्य ) किमेतत्--का खल्वेषा ।

सोनदेवसूनुः--स्त्रीरत्नमिदम् । अकस्मादासादितं संग्रामानन्तरम् ।

शिवनृपः--(सगौरवम्) अलमयुक्तभाषणेन । अभिजनवतीयं वनिता । सादर-मनुयुज्या सप्रश्रयं चोपसेव्या ।

सोनदेवसूनुः--( सांजलिबन्धम्) तथैव सत्कृतैषा । तत्परिचर्यार्थं कृषकस्त्री मया नियुक्ता ।

शिवनृपः--साधु। भो भोः स्वराज्यसेवकाः, मनसि संधार्यतां सदैव—

न विप्रकार्या वनिता कथंचि-
न्न चापराध्या मानसाऽपि नूनम्।
कुलांगना ज्ञापयते भवानीं
मुदा च तस्या हितमेव साध्यम् ॥१६॥

(शहाजादीं प्रति) अयि भगिनि, अलं विषादेन। प्रेषयामि भवतीं विजापुरं प्रति क्षेमेण। (क्षणं विचार्य) भवत्याः स्वरूपं दृष्ट्वा समुत्पन्नोऽयं विचारो मन्मनसि। यदि भवतीव रूपवती मन्माताऽभविष्यत् तर्हि शोभनगात्रोऽवर्तिष्ये। ( सर्वे सेवका उद्घोषयन्ति— "विजयोऽस्तु शिवनृपस्य"— "विजयोऽस्तु शिवनृपस्य"। )

( शहाजादी भूमिं स्पृष्ट्वा प्रणमति )

शिवनृपः—सचिव, किं मन्यते भवान्।

सोनदेवसूनुः—देव, भवद्वाक्यं प्रमाणम्। राजाज्ञामनुवर्तिष्यामहे।

शिवनृपः—दीयन्तां वस्त्रालंकारा अस्यै भगिन्यै।

(कृषकस्त्रीहस्तेन तथा क्रियते। कृषकस्त्रियै च दीयन्ते वस्त्राणि।)

शिवनृपः—हन्त भोः। गुर्वर्थोऽयं प्रसंगः। तथाहि—

संप्राप्तं सुकृतं सुदैववशतः शांतिश्च संपादिता
पित्राज्ञा स्वनुपालिता विनयनिष्पन्नेन शास्त्रान्विता।
सद्भक्त्या कुलदेवता विधिविधानेनापि संपूजिता
यन्मोहाद्विनिमोचितोऽस्मि गुरुणा सर्वावलोकात्मना ॥१७॥

(समाप्तो द्वितीयः प्रवेशः)

— ० —

## तृतीयः प्रवेशः

[ लालमहालमंदिरे जिजामाता शिवनृपश्चोपविष्टौ ]

जिजामाता—वत्स, सततप्रवासो बाधको भविष्यति। इति बहुवारं कथितं मया। परं तदनुरोधेन न व्यवहियते त्वया।

शिवनृपः—अम्ब, किं कुर्याम् । स्वराज्यकार्यं संपादनीयमेव । तदुपेक्षया महती हानिर्भविष्यति ।

जिजामाता—ह्यस्तने दिने कुत्रागमस्त्वम् ।

शिवनृपः—म्लेंछानां कल्याणकोशः समाक्रान्तोऽस्मत्सैनिकैः । तमानेतुं गतवानहम् ।

जिजामाता—(साश्चर्यम्) अपि महान् द्रव्यराशिः संप्राप्तः ।

शिवनृपः—अथ किम् । तेन च समर्थतरं भविष्यति बलमस्माकम् ।

जिजामाता—साधु । दक्षिणाभियानात् किं प्राप्तम् ।

शिवनृपः—मातः, अप्रतिमोऽलौकिकश्च स लाभः । सद्गुरुरामदासदर्शनं जातं चाफळग्रामे । यद्यत् तुकारामभक्तराजेन दर्शितं तद्द्विगुणं तत्रानुभूतम् । तथाहि—

काषायं वसनं बिभर्ति गुरुराड् दीर्घं शिखाकूर्चकं
पादत्रे बहुशोभने धरति वै मालां कराग्रे शुभाम् ।
दण्डो दक्षिणहस्तभूषणवरो दण्डाय दुष्टात्मनां
भिक्षार्थं भ्रमति स्फुरद्रघुवरावेशात्प्रणादन्मुनिः ॥१८॥

जिजामाता—हन्त मातर्जीवामि । किं न नीताऽहं सद्गुरुदर्शनाय ।

शिवनृपः—नेष्यामि । प्रायः स्वयमायास्यति सद्गुरुर्भवद्दर्शनाय । यतः किल—

प्रपंचपरमार्थयोगमधिकृत्य संयोजितं
विधानकमिहैव रामभजकेन शक्तिप्रदम् ।
युवान उपयोजिता हनुमतः सपर्याक्रमे
प्रकल्पितमठाः प्रवर्तनपराः प्रतिस्थानकम् ॥१९॥

जिजामाता—(सानन्दम्) कच्चित्प्रत्यक्षीकृता एतादृशा मठास्त्वया ।

शिवनृपः—बाढम् । अम्ब, तेषां दिनक्रमोऽपि परीक्षितो मया ।

जिजामाता—किं न दर्शयसि मां मठमेकम् ।

शिवनृपः—क्षणं प्रतिपालय । मातः, सर्वमपि द्रक्ष्यति भवती ।

जिजामाता—अयि वत्स, नूनं रामदासोपक्रमो नितान्तमुपकारको भविष्यति त्वत्स्वराज्यसंघटने ।

शिवनृपः—सर्वमेव । गुर्वेः समागमोऽयं रामदासशहासुतयोः । तथाहि–

ब्राह्मं तेजो विलसतितरां रामदासस्य शुद्धं
क्षात्रं तेजो विकसति शनैः पुण्यभूम्यां प्रबुद्धम् ।
संयोगोऽयं परिणमति वै हिंदवीराज्यवृध्द्यां
संतुष्यन्तां सकलकुलजा देवता यज्ञयोगात् ।। २० ।।

जिजामाता—दिष्टया महापुरुषः संप्राप्तो वत्सेन सद्गुरुस्थाने । अन्यदपि पृच्छामि रे वत्स– अपि दृष्टं किमप्यद्भुतं त्वया सत्पुरुषेऽस्मिन् ।

शिवनृपः—अथ किम् । अत्यन्तं कान्तिमान् निरपेक्षश्च विद्यते मम सद्गुरुः । महावस्त्रालंकाराः सदक्षिणा उपहारीकृता मया तस्मै । परं तत्सर्वं प्रत्यर्पितं मह्यं तेन । भिक्षावृत्तिरेवासौ । तेन हि न स्वीक्रियते प्रीतिदानम् ।

जिजामाता—महाव्रतमेतद् ।

शिवनृपः—अन्यच्च—

एकाकी किमु भोजनं प्रकुरुते स्वामी मठाभ्यन्तरे
इत्येवं मनसा विकल्पितमहो चांचल्ययोगान्मया ।
छिद्रान्तर्विनिवेशिते नयनमात्रे भीषणं तैजसं
दृष्ट्वाऽहं गतचेतनो विवशतो भ्रष्टोऽभवं भूतले ।।२१।।

जिजामाता—अहह । ततः किमभूत् ।

शिवनृपः—लब्धसंज्ञोऽहमपश्यं शिष्यान् सद्गुरुं च मत्समीपे ।

जिजामाता—न कुत्रापि शरीरे क्षतं वा व्यथा वाऽनुभूता त्वया ।

शिवनृपः—न मनागपि ।

जिजामाता—कस्मै कथितोऽनुभव एष पूर्वम् ।

शिवनृपः—न कस्मैचिद् । भवत्यै निवेदयामि तं प्रथममेव ।

जिजामाता—वत्स, भाग्यवानसि ।

शिवनृपः—अम्ब, मध्यरात्रसमयो जातः । विश्राम्यतामधुना । अभिवादये भवतीम् ।
(प्रणमति)

जिजामाता—आयुष्मान् भव ।
( शिवनृपः परिक्रामति पश्यति च बालमित्रम्)

वयस्यः—विजयोऽस्तु शिवनृपस्य ।

शिवनृपः—स्वागतं वयस्याय । आगतोऽसि मध्यरात्रे ।



वयस्यः—सुप्रसिद्धो लोकनाटचसंघ आगतोऽत्र । तत्प्रयोगं प्रत्यक्षीकरोतु भवान् ।

शिवनृपः—कस्मिन्स्थले ।

वयस्यः—प्रासादचत्वरे भवदाज्ञया स्वकौशलं दर्शयिष्यन्ति ते नटनर्तकाः ।

शिवनृपः—ग्राम्यविनोदं नाभिनंदामि । नापि मत्प्रीतये भवति कुत्सितकथानकम् ।

वयस्यः—देव, शंकरपार्वतीसंवादः कथानकविषयः । किमश्लीलं स्यात्तस्मिन् ।

शिवनृपः—भवतु । अनुसरामि त्वाम् ( परिक्रामतः )

(लोकनाटचम्)

भिल्लः—हे भिल्लिणी, किमस्ति त्वत्करण्डके ।

भिल्लिणी—कस्त्वम्, रे कितव किमर्थं पृच्छसि माम् ।

वाक्यं न कार्यं परकीयपुंसा
एतद्व्रतं मे परिरक्षितव्यम् ।
गन्तव्यमेवेह तवातिदूरं
नोचेच्च ताडचोऽसि फलेन गाढम् ॥२२॥

( नृत्यन्ती च गायन्ती च नेत्रकटाक्षान् क्षिपति चंचला । अंगविक्षेपांश्च दर्शयति गर्ह्यवृत्त्या । )

भिल्लः—अयि भिल्लिणि, कति फलानि तव ।

भिल्लिणी—बहूनि फलानि सन्ति । त्वां ताडयामि चिरं निष्ठुरं च ।

भिल्लः—द्वे फले तव दृश्ये । ( हसति ग्राम्यतया )

( भिल्लिणी कृतककोपेन तं ताडयितुकामा । स च हसति नेत्रकटाक्षान् क्षिपति च । )

गृहमायाहि मत्कान्ते बाहुपाशे च धारय ।
ताडय मोदकाभ्यां मां दश दन्तैर्यथेप्सितम् ॥२३॥

( शिवनृपः सकोपं सतिरस्कारं च त्यजत्यासनम् )

शिवनृपः—अलमुत्तानेन लोकनाटचेन । दण्डार्हाः सर्वे यूयम् । लोकदूषणं क्रियतेऽनेन । न तु लोकरंजनम् । ( सर्वे भीतभीता भवन्ति ) गम्यतामितः सत्वरम् । नोचेत्कशाभिस्ताडयिष्यन्ति युष्मान्सैनिकाः ।

( सर्वे भयाक्रान्ता निष्क्रान्ताः )

मनोरंजनमावश्यकं मनुजस्य । परं तेन चित्तक्षोभो न कार्यः । चित्तशांतिर्येनोपचीयते स एव क्रीडाप्रकारो हितावहो व्यक्तिजीवनस्य समाजजीवनस्यापि । तथाहि—

परिश्रमान्ते विहितो विनोदः
परं स सत्त्वाश्रित एव पथ्यः।
रजोगुणाढ्यो रमणीयरूपो
मनोविकारं तपयत्युदग्रम् ॥ २४॥

( समाप्तस्तृतीयः प्रवेशः )

— ० —

## चतुर्थः प्रवेशः

[ नगरचत्वरे जनसम्मर्दो दृश्यते ख्रिस्तधर्मप्रचारकश्च स्वधर्मं प्रस्तौति । ]

ख्रिस्त-प्रचारकः—भो भोः ख्रिस्तसुताः, श्रूयतां प्रभुघोषणा । सर्वे मानवा ईश्वरापत्यानि । ईश्वरश्च सर्वव्यापी निराकारो निर्विकारश्च । कथं तर्हि तस्य प्रतिमा कार्या । " मूर्खस्य प्रतिमापूजा " इति हिंदुधर्मगुरुभिरपि कथ्यते तारस्वरेण । (एकं कृषकं प्रति) भो वयस्य, किं ते नाम का वा त्वज्जातिः ।

कृषकः—गोविंदोऽहं जात्या वैश्यः ।

ख्रिस्त-प्रचारकः—(तं समालिंग्य) अहं ख्रिस्तिधर्मप्रचारकस्त्वां स्नेहेन परिश्वजे ।

कृषकः—(सांजलिवन्धम्) अनुगृहीतोऽस्मि ।

ख्रिस्त-प्रचारकः—त्वद्धर्मीया ब्राह्मणास्त्वां समाश्लिष्यन्ति किम् ।

कृषकः—न कदापि ।

ख्रिस्त-प्रचारकः—शृणुत रे धर्मबान्धवाः, हिंदुधर्मे दुःखकरा वर्णभेदाः कृताः । परं ख्रिस्तधर्मे सर्वे प्रभुबालकाः समानगुणा एव मन्यन्ते ।

(ततः प्रविशति शिवनृपः सपरिरक्षकः ।)

( " विजयोऽस्तु शिवनृपस्य । " " विजयोऽस्तु शिवनृपस्य ")

(इति जयघोषः श्रूयते । )

ख्रिस्त—प्रचारकः—स्वागतं शिवनृपाय । (सविनयम्) देव, अभिवादये भवन्तम् ।

शिवनृपः—भोः ख्रिस्तधर्मप्रवर्तक, स्वस्ति भवते । किमर्थमेष जनसमूहः ।

ख्रिस्त-प्रचारकः—ख्रिस्तधर्मसत्तत्त्वानि स्पष्टीक्रियन्ते मया सर्वेषां प्रबोधनाय ।

शिवनृपः—अयुक्तमेतत् सार्वजनीनस्थाने राजमार्गे च ।

खिस्त-प्रचारकः—देव, क्षम्यताम् । निवेदयामि संक्षेपण खिस्ताज्ञाः ।—

शिवनृपः--प्रथमं तावद् गम्यतां निजनिवासं तत्र च क्रियतां स्वधर्मप्रवचनम् ।

खिस्त-प्रचारकः—देव, सर्वमान्योऽस्मद्धर्मः सर्वसुखदश्च । तस्मात्–

शिवनृपः—ज्ञायते तत्सकलं मया । अपेहि स्वमन्दिरम् । तत्र ये समागच्छन्ति तानेवोपदिश यथेष्टम् । न सार्वलौकिके स्थले । तथाहि–

सर्वे धर्माः समगुणयुता ईश्वरं मार्गयन्ते
मध्येवर्ती स भवति सदा सन्निकृष्टोऽपि सर्वान् ।
मिथ्यावादो यदिह भवता धिक्कृतो भिन्नधर्मी
हिंसारंभो दुरितपथमाकर्षति क्षुब्धचित्तम् ॥ २५ ॥

कच्चिदुपलब्धो मदाशयो न वा ।

खिस्त-प्रचारकः--(सांजलिबन्धम्) ओम् । उपकृतोऽस्मि । (निष्क्रामति)

शिवनृपः--साधु । अनुष्ठीयतां स्वधर्मम् । मा खलु परधर्ममाक्रम्य ।

(परिक्रामति शिवनृपो रक्षकसहितः । )

(पश्यति च द्वितीयं लोकवृन्दम् । तत्रासीद् म्लेंछद्वयं मध्येमार्गं स्तूपस्थानरक्षणरतम् ।)

शिवनृपः--किमेतत् ।

पथिकः—देव, म्लेंछाभ्यां स्तूपः स्थापितो राजमार्गमध्यभागे ; पथिकांश्च तौ प्रबाधेते मुहुर्मुहुः ।

(शिवनृपं दृष्ट्वा नतमस्तकौ जातौ यवनौ ।)

शिवनृपः--अभिनन्द्या भवद्धर्मनिष्ठा । परं किमिति मध्येमार्गं प्रार्थनापरौ भवन्तौ । प्रार्थनाया एकान्तं निर्जनस्थानं श्रेयस्करं भवति ।

(यवनौ सांजलिबन्धं तूष्णीं तिष्ठतः । ततः केचित्पथिका हस्ताभ्यां परस्परं यावत्प्रक्षिपन्ति तावत्स्तूपः संचालितः स्वस्थानात् । काष्ठनिर्मिता सा मंजूषाऽऽसीत् । तां दृष्ट्वा साश्चर्यं सकोपं च सर्वे जनाः परस्परमवलोकयन्ति ।)

शिवनृपः—(सक्रोधम्) आः पापकर्माणौ । कपटप्रयोग एवैषः । नायं धर्माचारः । परं जनहितविरुद्धं दुष्कृतम् ।

(अत्रान्तरे यवनौ पलायितौ । राजसेवकाश्च तां काष्ठमंजूषामपनयन्ति । )

शिवनृपः—भोः प्रजाजनाः, असत्याचारः सर्वथा त्याज्यः । स्वधर्मोऽनुष्ठीयतां भक्तिप्रवणेन मनसा । परं छद्मानुवर्तनं न कदापि क्षम्यम् । (रक्षकानुद्दिश्य) गृह्येतां तौ यवनौ न्यायालये च प्रवेष्टव्यौ । शृणुत रे पौराः—

धर्मानुचार इह वा दिवि वा सुखार्थः
सत्त्वावधानमतियुक्तमतः प्रमाणम् ।
अन्योन्यमंगलमयं चरितं सुनेयं
शांति चिरं समनुभूय सुखस्वरूपाम् ॥२६॥

(अग्रतो देवालयं प्रविशति शिवनृपः । तत्र परमेशसंकीर्तनं प्रवर्तितमासीत् । शिवनृपं दृष्ट्वा सर्वे सबहुमानमुत्तिष्ठन्ति ।)

कीर्तनकारः—"विजयतां पंढरीनाथः।"— "विजयतां पंढरीनाथः"। (सर्वे करतालं दत्वोद्घोषयन्ति। ततश्च "हरे राम हरे राम— राम राम हरे हरे— हरे कृष्ण हरे कृष्ण— कृष्ण कृष्ण हरे हरे"— इति सर्वेऽनुपठन्ति करतालेन सह। )

कीर्तनकारः—सर्वे प्राणिनः सुखमिच्छन्ति– सुखार्थं सर्वथा प्रयतन्ते। यतः किल सुखरूप एव जीवात्मा मूलतः। उक्तं च पूर्वसूरिभिः—

"आनन्दाध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयान्त्यभिसंविशन्ति ।"—

आनन्दस्वरूपः परमात्मा। परमात्मांशो जीवात्मा। तस्मादानन्दस्वरूप एव जीवात्मा। इति तर्कसिद्धम् ।— भो भोः सज्जनाः, अनुपठ्यताम्— "विजयोऽस्तु विठ्ठलस्य"— "विजयोऽस्तु विठ्ठलस्य"

(करतालेन सह पठन्ति सर्वे सभ्याः)

कीर्तनकारः—सर्वेषां सुखमेव स्पृहणीयम्। परं सुखयत्नतोऽसुखबीजानि बहुश उप्यन्ते। यतः किल "मत्सुखं" इति वदन् पुरुषोऽहंकारयुक्तो देहाभिमानी च भवति। ततश्च परपीडां कर्तुमुत्सहते। अनीतिमार्गमप्यनुसरति । यदुक्तं जगद्गुरुभिः— "यः कश्चित्सौख्यहेतोस्त्रिजगति यतते नैव दुःखस्य हेतोः ।
देहेऽहंता तदुत्था स्वविषयममता चेति दुःखास्पदे द्वे ॥"

आचार्यवचनं सर्वथा शास्त्रशुद्धम्। तस्मादहंकारं ममत्वं च परित्यज्य व्यवहारः कर्तव्यः सुखार्थिभिः।— भोः सभ्याः, उच्चैः पठ्यतां भगवन्नाम येनाहंकारो विलीयते ममत्वं चोन्मूल्यते।— "जय हरिगोविंद"— "जय हरिगोविंद"।( जयघोषः क्रियते सभ्यैस्तारस्वरेण )

कीर्तनकारः—अस्मद्वैदिकधर्मस्य महत्तत्त्वमिदं यद्रागद्वेषौ परित्यज्य मानवैः परस्परं प्रति स्नेहेन वर्तितव्यम्। सुखं च प्राप्तव्यम् ।

"सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाप्नुयात् ॥"

ॐ नमो भगवते वासुदेवाय। ॐ नमो भगवते वासुदेवाय।

(समाप्तश्चतुर्थः प्रवेशः)

# पञ्चमोऽङ्कः

## प्रथमः प्रवेशः

[ लालमहालमंदिरे जिजामाता तुलसीपूजापरायणा ]

जिजामाता---गिरिजे, दीयतां मे जपमाला।

गिरिजा---यथाऽऽज्ञा। (तथा करोति)

जिजामाता---पुरोहितमाकारय। तस्मै दातव्या दक्षिणा।

गिरिजा---यथाऽऽज्ञा। (निष्क्रामति पुनश्च प्रविशति ब्राह्मणानुगता।)

ब्राह्मणः---देवि, इदं तीर्थम्। अयं च प्रसादः।

जिजामाता---साधु। स्वीक्रियतामियं दक्षिणा। (ददाति दक्षिणाम्। ब्राह्मणश्च गृह्णाति ताम्)

ब्राह्मणः---शुभं भूयात्। शुभं भूयात्। (निष्क्रान्तः)

गिरिजा---देवि, मन्मातुलो द्रष्टुमिच्छति देवीम्।

जिजामाता---किमर्थम्।

गिरिजा---ग्रामसेवकोऽसौ। किमपि निवेदयितुकामो राज्यव्यवहारमुद्दिश्य।

जिजामाता---आहूयताम्।

(निष्क्रान्ता गिरिजादासी। पुनश्च प्रविशति ग्रामसेवकानुगता।)

गिरिजा---इयं देवी। तत्र स्थीयताम्।

ग्रामसेवकः---प्रणतोऽस्मि देवीचरणयोः। (साष्टांगपातं प्रणमति)

जिजामाता---किं कथनीयम्।

ग्रामसेवकः---(सास्रं सगद्गदं च) महती हानिर्मे जाता। सर्वथा विनष्टोऽस्मि।---त्रायतां-त्रायताम्।

जिजामाता---भद्र, का हानिः---कथं च जाता।

ग्रामसेवकः---सगोत्रेणापहृतं मत्पदम्। न किमपि मे दुश्चरितम्। अयि मातः---

अभयं प्राप्तुमिच्छामि देवीचरणयोरिह।
वात्याहतो बलीवर्दो गोशालां व्रजते यथा॥ १॥

(पुनश्च साष्टांगपातं प्रणमति)

जिजामाता--उत्तिष्ठ, भद्र, उत्तिष्ठ।

ग्रामसेवकः—अभयं विना नोत्तिष्ठामि।

जिजामाता—अभयदानं दीयते तुभ्यम्। विस्तरेण ब्रूहि निजचरितम्।

ग्रामसेवकः—(उत्थाय) देवि, शिवनृपस्य शासनाद् मत्पदं प्रदत्तं सगोत्राय। देवि श्रूयतां यदि कुतूहलम्—

दायादो मे दुष्टो वदत्यलीकं सदाप्यसंबद्धम्।
तद्वचनान्नृपकोपो जातो मह्यं निरर्थकं नूनम् ॥२॥

जिजामाता—गिरिजे, आहूयतां वत्सः शिवनृपः।

गिरिजा—यथाऽऽज्ञा। (निष्क्रान्ता)

ग्रामसेवकः--देवि, विठ्ठलभक्तोऽहं गच्छामि प्रतिवर्षं पंढरीनाथदर्शनार्थम्। कण्ठस्थानि बहूनि पद्यानि पठाम्यहोरात्रम्।

जिजामाता—पठ्यतां पद्यमेकम्।

ग्रामसेवकः—आम्।

रूपं देवस्य पश्यामि। सुखं सेवे हि निर्भरम् ॥
विठ्ठलो महनीयोऽसौ। माधवोऽपि महोन्नतः ॥
मदीयं बहुलं पुण्यं। येन मे प्रेम माधवे ॥
सागरः सर्वसौख्यस्य। विठ्ठलो विश्वपालकः ॥३॥

(ततः प्रविशति शिवनृपो गिरिजानुगः)

शिवनृपः—अम्ब, अभिवादये।

जिजामाता—वत्स, आयुष्मान् भव।

शिवनृपः—किमर्थमाहूतोऽहम्।

जिजामाता--पश्य, एष ग्रामसेवकः स्वपदात्परिभ्रष्टः संजातः।

(ग्रामसेवको दण्डप्रमाणेन पतति भूमौ)

शिवनृपः--आम्। सम्यग् ज्ञातोऽस्ति मया। महादांभिकः कापटिकश्चायं विद्यते। अत्र भूमौ पतति दण्डवत् परं ग्रामे विचरति वृकवत् हिंस्रः। तथाहि—

दुरात्मा च दुरीहोऽयं दुराचारो दुरवितकृत्।
कपटं कार्यतेऽनेन स्वजातीयैश्च मायिना ॥४॥

( ग्रामसेवकं प्रति ) किं रे छद्मिक, म्लेंछपक्षं स्वीकृत्य को लाभः प्राप्त-स्त्वया। उत्तिष्ठ, स्फुटं ब्रूहि। निर्दोषोऽसि किम्।

( नोत्तिष्ठति ग्रामसेवकः )

जिजामाता--हा धिक्-हा धिक्। शत्रुभिः पत्रविनिमयः कृतोऽनेन।

शिवनृपः--अथ किम्। अस्य हस्ताक्षरं विद्यते कायस्थकार्यालये। निखिलं निपुणं निरूप्य मयाऽऽदेशो दत्तः। निरीक्ष्यताम्--न वदति किमपि खलोऽयं मत्पुरतः।

जिजामाता—पद्यानि पठति-ईशस्तोत्राणि गायति-सौम्यं च वदति।

शिवनृपः—सर्वोऽयं दम्भः। विश्वासघातकोऽयं महाशठः। अस्य " मधु तिष्ठति जिह्वाग्रे। हृदये तु हलाहलम्॥ " श्रूयताम्—

स्वधर्मः प्रकाश्यः स्वभक्तिः प्रदर्श्या
गुणोत्कर्षमात्रेण लोकाः प्रतार्याः।
परं स्वार्थसिध्द्यै जनानां विनाशो
ध्रुवं कार्य एतैः खलैः क्रूरकृत्यैः ॥५॥

जिजामाता--क्रियतां यत्सांप्रतम्।

शिवनृपः--कः कोऽत्र द्वारदेशे।

प्रतिहारः—( प्रविश्य ) अयमस्मि, देव।

शिवनृपः--नीयतामेष कारागारम्। ( मातरं प्रति ) अन्यच्च, मातः, या भवद्दासी मातुलमिति शब्दापयत्येनं साऽपि नूनं परीक्षणीया भवति।

जिजामाता—अनुयुज्यतां साऽपि यथोचितम्।

( ततः प्रविशति प्रतिहारः आंग्लदूतपत्रं गृहीत्वा। )

प्रतिहारः—देव, आंग्लदूत आयातो द्वारदेशे। द्रष्टुमिच्छति देवम्।

शिवनृपः--भवतु। दर्शनगृहे तं समागच्छामि। अम्ब, गम्यते मया।

(परिक्रामति दर्शनगृहे सचिवकायस्थौ तिष्ठतः। ततः प्रविशति द्विभाषिकानुगत आंग्लदूतः प्रतिहारश्च।)

प्रतिहारः—इतो देवः। इतः स्थीयताम्। (आंग्लदूतः प्रणमति स्वपध्दत्या)

शिवानृपः--स्वागतमांग्लदूतस्य। को हेतुरागमनस्य।

द्विभाषिकः—देव, आंग्लवाणिज्यवर्गोऽभिनन्दति भवन्तं स्वराज्यसंस्थापकम्।

शिवनृपः--साधु। शिष्टाचारनिपुणा आंग्ला इति जानामि।

द्विभाषकः—अत्रभवान् विज्ञाप्यते च वाणिज्यविषयेऽनुग्रहार्थं भवत्प्रदेशे ।

शिवनृपः—यथाऽस्मदनुग्रहः प्रार्थ्यते तथाऽस्माकमपि काचित्प्रतिपत्तिर्दातव्या । विश्वासविनिमयेन व्यवहर्तव्यम् ।

स्नेहेन संघमनुधावति वै मनुष्यः
संभूयकारिण इहोत्सवभोगमग्नाः ।
तत्त्वं तदेवमनुकार्यमतो नृप.लैः
सौजन्ययुक्तसहजीवनमस्तु तेषाम् ॥६॥

द्विभाषकः—सम्मत एष समयोऽस्माकम् ।

शिवनृपः—सुस्पष्टमिदं यदस्माकं शासनसूत्राणि युष्माभिरनुविधातव्यानि । अस्मन्न्यायालये कलहनिर्णया दास्यन्ते । ते पालनीया उभयपक्षाभ्यां निःशब्दम् ।

द्विभाषकः—एवं करिष्यन्ति वाणिज्यनिपुणा आंग्लाः । भवच्छासनमनुवर्तिष्यन्ति ।

शिवनृपः—साधु । अग्न्यस्त्राणि लोहनाड्यश्चास्मभ्यं क्रेतव्याः । नियमपत्रं लिख्यताम् ।

(परस्परं प्रीतिदानानि दीयन्ते)

(समाप्तः प्रथमः प्रवेशः)

— ० —

## द्वितीयः प्रवेशः

(आखेटकविहाराय प्रस्थिताः शिवनृपो वयस्याश्च ।)

शिवनृपः—मानवशब्दाः श्रूयन्ते समीपे ।

तानाजीवीरः—(सस्मितम्) तस्करा भवेयुरिति मन्ये । राजानं गृहीत्वा धननिधिं लप्स्यन्ते ।

येसाजीवीरः—कथं ग्रहीष्यन्ति राजानम् ।

पासलकरः—लीलयैव । त्रयो धूर्ताः पलायिष्यन्ते राजा च तद्धस्तगतो भविष्यति ।

तानाजीवीरः—परं नैष सामान्यो नाममात्रो राजा ।

पासलकरः—किं कुर्यात् ।

येसाजीवीरः---तान् लुन्ठकानपि विलोभ्य स्वराज्यव्यवहारे प्रवर्तयिष्यतेऽयं राजा ।

शिवनृपः---भो वयस्याः, नैतच्छक्यं सर्वदा । स जावलीजल्पको हन्तव्योऽभूदन्ततः ।

पासलकरः---(साकूतम्) निजश्वशुरहन्ता निरुपमजामाता ।

(सर्वे तं विनोदं परिज्ञाय हसन्ति)

तानाजीवीरः---(निरूप्य) न ते तस्कराः । शस्त्रचालनमभ्यस्यन्ति नवसैनिकाः ।

शिवनृपः—बाढम् । पश्यत—स स्थूलः कृपाणं न धारयति यथोचितम् ।

(सर्वे हसन्ति)

येसाजीवीरः---स्वनासिकामेव छिन्द्यात्ततः ।

शिवनृपः---अन्यतमश्च स वंशदण्डवत्प्रांशुः शूलफलं दृष्ट्वैव बिभ्यति । (सर्वे हसन्ति) श्रूयताम्—

यद्वत्कुशलः शिल्पी प्रतिमां तक्षति शुभां हि पाषाणात् ।
तथा विनेया योधा एतेभ्यो मानवेभ्य उद्बुद्धाः ॥ ७ ॥

वयस्याः—एवं करिष्यामः । (उपसर्पन्ति सर्वे)

(सर्वे नवसैनिकाः उत्तिष्ठन्ति सांजलयो भवन्ति च)

शिवनृपः—नवसैनिकाः, शस्त्रसंचालनमभ्यस्यते किं युष्माभिः ।

स्थूलः—देव, एवमेव ।

शिवनृपः—(तस्य हस्तात्खड्गं गृहीत्वा) इत्थं धरणीयः कृपाणः । (दर्शयति तत्संचालनम्)

तानाजीवीरः---वामहस्ते फलको दक्षिणहस्ते च कृपाणो धार्यः ।

(येसाजीवीरस्तानाजीवीरेण सह छद्मयुद्धं नाटयति)

शिवनृपः—शत्रुस्तावदितोऽपि त्वरयाऽऽघातान् करोति । तान्निवार्य हन्तव्यो रिपुः । तथाहि—

संस्काराहं भुजयुगमथाभ्यासयोगात्सुदीर्घात्
कायाक्लेशः सहनसुलभो बोभवीति प्रयत्नात् ।
शत्रोश्छिद्रं सपदि सुनिरूप्यैव हन्यः स सद्यः
संयोगोऽयं सलजवकलानां यशोदो ह्युपचार्यः ॥ ८ ॥

प्रांशुः—देव, किं प्रयोजनमेतेन दण्डेन ।

शिवनृपः—अयं शूलः। पश्यास्य निशितं फलम्। दूरादायान्तं रिपुं हन्तुं शक्यतेऽनेन। एतेन प्रक्षिप्तेनापि रिपुर्वा पशुर्वा हन्यते शीघ्रम्।

प्रांशुः—अहो गुरुत्वमस्य शूलस्य। दुःखं खलु प्रक्षिप्यतेऽयं सुदूरम्।

शिवनृपः—अभ्यासेन सर्वमपि साध्यम्। त्वं पुनर् उच्छ्रितदेहोऽसि। प्रचारेण प्रसिद्धः प्रासिकः प्रतिपद्यसे।

(नवसैनिको लोहनाडिं दर्शयति)

सैनिकः—देव, किमेतत्। का चास्योपयोगिता।

शिवनृपः—एषा लोहनाडी। लोहगुलिकाः प्रक्षिप्यन्तेऽनया सुदूरम्। हन्यन्ते च रिपवो वा पशवो वा।

(सा कथं धारणीया कथं च गुलिकाः प्रक्षेपणीयाः-तत्सर्वं दर्शयति। स्फोटशब्दं श्रुत्वा साध्वसाक्रान्ता भवन्ति नवसैनिकाः)

शिवनृपः—अमोघमिदमस्त्रम्। तथाहि—

लोहनाडिभेदनं परं विनाशकारणं
गोलका विदारका जवेन लक्ष्यवेधकाः।
स्कंधभागधारणं दृढं च हस्तबंधनं
लक्ष्यवेधदर्शनं च कुंचिकावकर्षणम् ॥ ९ ॥

(नवसैनिको धारयति लोहनाडीं, लक्ष्यवेधं निरीक्षते, परं साध्वसाक्रान्तो वेपते। अंकुटं यावत्स्पृशति तावत्पृष्ठतः पतति।)

नवसैविकः—अहह, बलवद्दारुणमग्न्यस्त्रम्।

शिवनृपः—न स्फोटः—नापि शब्दः। कथं दारुणत्वं प्रतीयते। (स्वयं धारयति लोहनाडीं) पश्य, लक्ष्यवेधं करोमि। (लीलया तत्करोति। सर्वे नवसैनिकाः साश्चर्यं सहर्षं चावलोकयन्ति) न किमपि गहनं वाऽसाध्यं वा। सतताभ्यासः कर्तव्यः। तथाहि—

मनोबलं मूलमयात्रबार्यं
स्थैर्यं च धैर्यं परिशीलनीयम्।
प्रयोग इष्टः प्रथमं द्रुमेषु
पश्चाच्च वन्येषु मृगेषु कामम् ॥१०॥

नवसैनिकाः—अनुगृहीताः स्मः।

तानाजीवीरः— अपरं च, सर्वाणि शस्त्रास्त्राणि सावधानतया रक्षणीयानि । प्रत्यहं तैलांजनमावश्यकं तेषाम् । परं जलार्द्रता सर्वथा परिहार्या । बाला वा अबला वा न स्पर्शेयुः कदापि तानि ।

नवसैनिकाः—आम् । एवं करिष्यामः ।

( शिवनृपः परिक्रामति वयस्यैः सह )

शिवनृपः—सुमहत्सुसज्जं च बलमावश्यकम् । यतः किल विजापुराधीशो बलवदपराद्धा वयम् ।

वयस्याः— सत्यम् । समाधास्यामो नवतरुणान् ।

शिवनृपः—सत्वरं कार्यमेतत् ।

तानाजीवीरः—एकैकशः प्रतिमंडल गमिष्यामः । सुदृढदेहान् यूनश्च सेनाविभागे प्रत्याश्वासयामः ।

शिवनृपः—स्थाने स्थाने रामदासस्थापिता मठा विद्यन्ते । तच्चालकैः स्नेहसंबंधाः संपादनीयाः ।

येसाजीवीरः—आम् । स्वधर्मप्रचारः स्वराज्यसंवर्धनाय सर्वथोपकारको भविष्यति ।

शिवनृपः—अन्यच्च, मठचालका उपयुक्तवार्त्ताः कथयिष्यन्ति मुहुर्मुहुः । तत्साधनेन शत्रुसंचलनं ज्ञास्यते ।

पासलकरः—तेन हि सिद्धा भविष्यामः प्रागेव संग्रामाय ।

शिवनृपः—कदाचित्कूटोपायाः कार्यसाधकाः समुत्पद्यन्ते ।

तानाजीवीरः—अपि धर्म्या भवन्ति कूटोपायाः ।

शिवनृपः—(विचार्य) वयस्याः, धर्म्याधर्म्ययोर्विवादे कवयोऽपि मोहिताः । तथापि ये परधर्मीया वा स्वधर्मीया वा दुराचारा दृश्यन्ते तेषामुच्छेदनं श्रेयस्करम् । तथाहि–

धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः ।
प्रजानां पीडकाः पापास्ते वै दण्डचा हितार्थिभिः ॥११॥

अपरं च—

सौख्यं साधयितुं समाजधुरिणो धर्मोपदेशे रता
धर्माचारमुपासका अनुभवन्ति स्वास्थ्यमस्मिन्भवे ।
लोकोपप्लवकारकाः खल दुराचारा मता धार्मिकै–
स्तत्तेषां हननं प्रमाणयति सद्धर्मावतारो गुरुः ॥१२॥

येसाजीवीरः——तदेवोक्तं प्राचीनैः "शठं प्रति शाठ्यमेव कार्यं न तु सत्यम्"।

शिवनृपः——बाढम्। सामान्यत आकस्मिकोऽवस्कंदः सफलो भवति।

तानाजीवीरः——सत्यम्। तदर्थं शत्रुनिवेशवार्त्ता प्राप्तव्या यथार्था।

शिवनृपः——दुर्गाक्रमणे प्राकारारोहणं कार्यमलक्षितम्। तत्रापि ग्राहरज्जुर्वा गुण-सोपानपद्धतिर्वा बहूपयुक्ता।

येसाजीवीरः——यदि द्वाररक्षक उत्कोचदानेन प्रलुभ्यते। अथवा गुप्तमार्गोऽन्विष्यते दुर्गान्तिर्गामी, तर्हि सफलो भविष्यत्यभियोगः।

शिवनृपः——बाल्ये पितृसहायेन मयाऽवलोकितानि समुच्छ्रितानि यवनसिंहासनानि। तदाऽहं चिन्तितवान् यत्ततोऽप्युन्नतानि सिंहासनानि प्राप्स्यामि। तथाहि——

सिंहासनानां तनुतुंगताऽस्ति
दुर्गा गिरीणां गगनंलिहा वै।
तस्मादहं दुर्गनृपासनोऽस्मि
दुष्काम्यपीठो भविता सुभाग्यः ॥१३॥

वयस्याः——( सहर्षम् ) ओम्। दिष्ट्या दुर्गसिंहासनः स्वामी।

शिवनृपः——समस्थलस्थं शत्रुं प्रतियोद्धुं विविधानि छद्मानि प्रयोक्तव्यानि।

पासलकरः——एकमहं कथयामि—अश्वखुरत्राणि प्रतीपं निधातव्यानि। यथा विरुद्धदिशां गच्छेच्छत्रुः।

येसाजीवीरः——अन्यच्च, वृषभखुरत्राणि तुरगखुरेषु निधातव्यानि। येन वञ्चिता भवेयुर्वैरिणः।

तानाजीवीरः——अकस्मादभिपात्यो रिपुः। यथा स शयानो वा सुखासीनो वा हन्तव्यो भवेत्।

शिवनृपः——साधु। अनुधावन्तं शत्रुमपि विरुद्धमार्गं प्रति प्रेरयितुं रणवाद्यानि वा प्रकाशसाधनानि वा प्रयोक्तव्यानि यथाकालम्। तथाहि——

रणयात्रा हि विमृश्या पूर्वं प्रपंचतः खलु धीमद्भिः।
साधयितव्या च तथा जवेन वीरैर्निजैकमत्येन ॥१४॥

( समाप्तो द्वितीयः प्रवेशः )

## तृतीयः प्रवेशः

[ प्रासादस्थे कार्यालये विचारमग्नः शिवनृपः ]

शिवनृपः—संस्कृतपण्डितैर्विविधविषयानधिकृत्य विरचिताः प्रमाणग्रन्थाः। तेषु चाणक्यमुनेरर्थशास्त्रं नाम विवेकरत्नाकरः। राज्यतंत्रं प्रपंचितं तस्मिन् सविस्तरम्। बाह्यरिपवो जेतव्याः। तथा च राज्यान्तः शासनं विवेकेन कर्तव्यम्। उक्तं च—

राजाज्ञा व्यवहारदर्शनविधौ लोकेषु वाच्याः स्फुटं
योक्तव्याः खलु मंत्रिणस्तदनुचारार्थं महाज्ञानिनः।
नैपुण्यात्सुपरीक्षणं समयतः कार्यं च तेषां ध्रुवं
विश्वासो न विधेय उत्तमगुणैश्चित्तान्धकारान्मनाक्॥ १५॥

(विचार्य) प्रथमतो मोरोपंतः परीक्षणीयः। तं प्रति प्रेषयामि जगदेवं कपट-वेषधारिणम्। (परिक्रम्य) कः कोऽत्र द्वारदेशे।

प्रतिहारः—( प्रविश्य ) देव, अहमस्मि।

शिवनृपः—भैरव, आहूयतां जगदेवः सत्वरम्।

प्रतिहारः—यथाऽऽज्ञा। ( निष्क्रान्तः )

शिवनृपः—परीक्षणान्ते शीलवान्मंत्री कथं सान्त्वयितव्यस्तदपि विचार्यम्। तथाहि—

शीलान्वितं मंत्रिणमादधेऽहं
स्वाधानपीठे महनीयभावात्।
चाणक्यनीतिं च निवेदयामि
लोकस्य कार्ये तमिहाश्रयामि॥१६॥

( ततः प्रविशति प्रतिहारो जगदेवानुगतः )

प्रतिहारः—देव, एष आयाति जगदेवः।

( जगदेवः प्रणमति शिवनृपम् )

शिवनृपः—अयि जगदेव, महत्कार्यं विन्यस्यते त्वयि। सावधानमनुष्ठीयताम्। ( कर्णे कथयति )

जगदेवः—एवं करिष्यामि।

शिवनृपः--शुभास्ते पन्थानः सन्तु ।

( निष्क्रान्तो जगदेवः )

भो भैरव, आहूयतां पार्वती सत्वरम् ।

प्रतिहारः--यथाऽऽज्ञा । (निष्क्रान्तः)

शिवनृपः—अत्यन्तं चतुरा साहसिकी चेयं पार्वती । तां प्रेषयामि सुमंतं प्रति तस्य राजनिष्ठां परीक्षितुम् । तथाहि-

सामान्यतः पुरुषचित्तमिहास्ति लुब्धं
सीमंतिनीसुभगविभ्रमसाधनानाम् ।
तत्तोऽपि गौरवभरेण विलाससौख्यं
प्राप्तुं स मोहमुषितो भवतीति सत्यम् ।। १७ ।।

प्रतिहारः—इतो देवः । इतः स्थीयताम् ।

(पार्वती बद्धांजलिस्तिष्ठति)

शिवनृपः—अयि पार्वति, एकस्मिन्स्वराज्यकार्ये त्वां नियोक्तुमिच्छामि । महताऽवधानेन तदनुष्ठेयं भवत्या ।

पार्वती—(सांजलिबन्धम्) एवं करिष्यामि ।

शिवनृपः—(कर्णे कथयति ) इति कूटवेषेण गन्तव्यं मोहजालं च विस्तारयितव्यम् ।

पार्वती—यथाऽऽज्ञा

शिवनृपः--सकलसाहित्यं ग्रहीतव्यमन्तःपुरात् । सुनिभृतं च व्यवहर्तव्यम् ।

पार्वती--तथा । (निष्क्रान्ता)

शिवनृपः—भोः सद्गुरो, विमलमनसा प्रवर्तितोऽस्मि स्वराज्यकर्मणि । सफलो भूयान्मत्प्रयत्नः । इति प्रार्थना ।

प्रभो प्रणतपालक स्वजनरक्षणे दीक्षितः
परीक्षणपरोऽहमस्मि सचिवेषु निष्कामतः ।
हिताय भवतात्समुद्यम इहैव सद्धर्मिणां
जगज्जनकतर्पणं भवतु सर्वतः सिद्धिदम् ।। १८ ।।

पत्रसंभारो वाचनीयोऽस्ति । कायस्थकार्यालयं गन्तव्यमधुना ।

( परिक्रामति)

(ततः प्रविशतः प्रधानो मोरोपंतो वणिग्वेषधारिणा जगदेवेनानुगतः ।)

मोरोपंतः—को भवान् । कुतश्चायातः ।

जगदेवः--वाणिज्यकारी भवामि । कल्याणप्रांतादागतो भवन्तं स्वराज्याधिकारिणं स्नेहतो द्रष्टुम् ।

मोरोपंतः--(साश्चर्यम्) कथं "स्नेहत" इति । अपरिचितयोरावयोः कथं संजातः स्नेहः ।

जगदेवः--(सोल्लासम्) यत्र यत्र गम्यते वणिग्भिस्तत्र तत्र सपदि स्नेहः समुत्पाद्यते । तथाहि—

धनैः पारक्यिाः स्वकीया भवन्ति
धनैर्द्वैतभावो विनश्यत्यकाण्डे ।
धनैः स्नेहबोधः समुत्पद्यते वै
धनैरन्तरंगं प्रकाशान्वितं स्यात् ॥ १९ ॥

(सुवर्णनाणकपूर्णं कौशेयपुटं मोरोपंताय ददाति । तं चाश्लिष्यति प्रेम्णा)

मोरोपंतः—(साकूतम्) अलौकिकस्ते स्नेहः । उपविश्यताम् । किं ते कार्यम् ।

जगदेवः—भोः पंतप्रधान, राजस्वादानं क्षम्यतामस्तद्वाणिज्येषु राजाज्ञया । तदर्थं च पंचसहस्रं सुवर्णनाणकानि दास्यन्ते भवते प्रतिवर्षम् ।

मोरोपंतः—(विचार्य) साधु । महान् खलु मे प्रमोदः । आगम्यतामन्तर्गृहं मया सह पायसपानार्थम् । स्नेहं प्रतियच्छामि स्नेहाय ।

(मोरोपंतः सेवकेभ्यः संकेतं ददाति । तं जगदेवं च शिवनृपं प्रत्यानयति बन्दिग्राहम्)

शिवनृपः—भो मोरोपंत, क एषः । किमर्थं च वन्दीकृतः ।

मोरोपंतः—कल्याणप्रांतीयः कोऽपि वाणिज्यकारी । ददाति मह्यमिदमुत्कोचदानं वाणिज्यकरमोक्षार्थम् ।

शिवनृपः—(जगदेवस्य कूटवेषमपनीय) पश्य, अस्माकं जगदेवोऽयं न कोऽप्यन्यः ।

मोरोपंतः—(साश्चर्यम्) सर्वथा वञ्चितोऽहमनेन कितवेन । (विचार्य) कच्चिद्भवदादेशात् प्रसारितं छद्मजालमनेन ।

शिवनृपः—बाढम् । क्षम्यतां, भो मोरोपंत । त्वमेव विश्वासार्हः पंतप्रधानः स्वराज्यस्य । तथाहि—

विश्रंभार्हो गुणगणयुतो निश्चितस्त्वं प्रकामं
कार्याधारो निपुणमतिमानुद्यमाधानमूर्तिः ।
दिष्ट्या लाभो भवति सुखदस्त्वादृशां राज्यहेतो-
र्धन्यो धन्यो गुरुवरकृपापात्रभूतो ममात्मा ॥२०॥

मोरोपंतः—(सगद्गदम्) रुद्धकण्ठोऽस्मि । न किमपि वक्तुं समर्थोऽहम् ।

(परिक्रामन्ति सर्वे । ततः प्रविशतः सुमंतः पार्वती च शहाजादीवेषा)

सुमंतः—का भवती । कुतश्चायाता ।

पार्वती—( सलज्जम् ) न किमपि वक्तुकामाऽहम् । केवलं भवद्गुणमोहिताऽऽगताऽस्मि भवच्चरणसेवनार्थम् ।

सुमंतः—( साश्चर्यम् ) यवनजातीया भवती कथं गीर्वाणवाणीं वक्तुं समर्था ।

पार्वती—हृदयेश्वर, जन्मना हिंदुधर्मीयाऽहम् । यवनैरपहृता विजापुरं च प्रापिता । निर्विण्णाऽस्मि यवनजीवनक्रमेण ।

सुमंतः—विजापुरादायाता भवती । कथमेकाकिनी दूरादागता ।

पार्वती—निर्भीकाऽहं पर्यभ्रमं नगरान्नगरम् ।

सुमंतः—किं प्रसिद्धं नगरं दृष्टं भवत्या पूर्वम् ।

पार्वती—नासिकनगरं नितान्तं रमणीयम् । तत्र विद्यते भगवान् रामचन्द्रो भक्तरक्षकः ।

सुमंतः—(साकूतम्) शहाजादि, भृशमनुरक्तोऽहं त्वयि । (तामुपगुह्य) निर्विण्णोऽस्मि जीवनवृत्त्याऽत्रत्यया । त्वया सह गन्तुकामोऽस्मि विजापुरम् । तत्र च सेनापतिपदं प्राप्नुयां त्वत्साहाय्येन ।

पार्वती—सुलभं भवेत्तत् । प्रथमं तावज्ज्ञातव्या स्वराज्यसेनासंख्या । कति पदातयः कति चाश्वारोहाः सन्ति । अहं प्रथमं गच्छामि विजापुरं निवेदयामि चाखिलां प्रवृत्तिं यवनाधीशाय । तदादेशं संपाद्य पुनरायास्यामि भवन्तं नेतुम् ।

सुमंतः—(सकपटम्) नितान्तं चतुरा त्वं मद्वल्लभा । आयाहि शुद्धान्तम् तत्र रहसि कथयिष्यामि सकलम् ।

(तां नयत्यन्तःपुरं दासीसाहाय्येन च वन्दीकृत्याकर्षति शिवनृपस्य समीपम् ।)

शिवनृप—भोः सुमंत, किमेतत् ।

सुमंतः—दृश्यतामियं पिशाची । स्वराज्यबलसंख्यां ज्ञातुकामा ।

शिवनृपः—किमर्थं "पिशाची" इति शब्दाप्यते । शहाजादीवाभिजनवतीति भाति ।

सुमंतः—एकदा वदति "विजापुरादागता" इति । पुनश्च वर्णयति नासिकस्थं रामचन्द्रम् । इत्थसंबद्धप्रलापिनीयमिति मन्ये । नितांतं कामातुरावत् कण्ठग्राहमाकर्षति च ।

शिवनृपः—(सस्मितम्) अपसार्यतामवगुण्ठनम् । (पार्वती तथा करोति) एषा शुद्धान्तपरिचारिका पार्वती ।

सुमंतः—(साश्चर्यम्) देव, सुखश्रवो दम्भस्फोटोऽयम् । क्षम्यतां दुरुक्तिः ।

शिवनृपः—मा, मैवम् । अहमेव खल्वपराधी । चाणक्यमुनेरर्थशास्त्रगतानि कानिचित् तत्त्वानि परीक्षणीयानि— इति मनसि कृत्वा प्रेषितो मया जगदेवो

मोरोपंतं प्रति पार्वती च प्रेषिता भवन्तं प्रति। सकलं खलु सुखोदर्कं संजातम्। तथाहि-( मोरोपंतः प्रविशति )

प्राप्तं समाधानमथातिमात्रं
मंत्रिद्वयं शुद्धतमं सुवर्णम्।
कार्यं स्वराज्यस्य विवर्धनीयं
लोकस्य भाग्यं सुतरां प्रशस्यम् ॥२१॥

सुमंतः—देव, किमिदं नूतनपुस्तकमर्थशास्त्रं नाम।

शिवनृपः—न नूतनम्। प्राक्तनमेव चाणक्यमुनिविरचितम्।

सुमंतः—कोऽसौ चाणक्यमुनिः— वेदर्षिः— स्मृतिकारो वा।

शिवनृपः—मौर्यराजकुलस्य पुरोहितो बभूव सः। तेन प्रणीतोऽयं ग्रंथः—"अर्थशास्त्रं" नाम। तस्मिश्च राज्यव्यवहारो विस्तरेण वर्णितः।

सुमंतः—सर्वे सचिवा अभ्यस्यन्तु तं ग्रन्थं साद्यन्तम्।

शिवनृपः—सम्यग् मंत्रणम्। अस्मत्पुरोहितो व्याख्यास्यति तं ग्रन्थं सर्वान् सचिवान्। हन्त भोः—

भाग्येन वीरपुरुषाः सचिवा गुणाढ्या
निष्ठाव्रता जनपदेषु यशोधनाश्च।
ज्ञानार्थिनो निजपरंपरया सनाथा
अस्मत्कुले निरतमानसराजहंसाः ॥२२॥

(तृतीयः प्रवेशः समाप्तः)

---

## चतुर्थः प्रवेशः

[ लालमहालस्थे निजमंदिरे जिजामातोपविष्टा दासीसेविता । ]

जिजामाता—गिरिजे, भृशमुत्साहिताऽहमद्य प्रभाते।

गिरिजा—देवि, प्रसादचिह्नमिदम्। प्रियजनसंमिलनं भवेत्। (हसति)

जिजामाता—मन्ये कुत्रापि गिरिशिखरस्थिताऽहम्। तस्मात्स्थानाच्च दृग्गोचरो भवति महानवकाशः।

गिरिजा--(सचिन्तम्) अहह, कोऽप्यपकारो भवेद्देवीदेहस्य । दुःखदा घटनेयम् ।
(जिजामातृ-पादयोः पतित्वा रोदिति ।)
(अत्रान्तरे प्रविशति शिवनृपः सपत्नीकः ।)
शिवनृप---अम्ब, अभिवादये ।
जिजामाता—वत्स, आयुष्मान् भव ।
(शिवपत्नी प्रणमति । तां चाश्लिष्यति जिजामाता)
शिवनृपः—किमर्थं रोदिति गिरिजा ।
जिजामाता—क्षणाद्धसति । क्षणाच्च रोदिति ।
(उच्चै रोदिति गिरिजा)
शिवनृपः—किं निमित्तम् ।
जिजामाता—प्रथमं मयोक्तम् "भृशमुत्साहिताऽहमद्य" । तदाकर्ण्य सहर्षं हसितवती । तदनन्तरं "गिरिशिखरस्थाऽहं विशालप्रदेशं पश्यामि" इति मदनुभवं श्रुत्वा प्रमुक्तकण्ठं रोदितीयम् । (पुनरपि रोदिति)
शिवनृपः—द्वितीयोऽपि शुभानुभवः । परमार्थमार्गस्थस्यैतादृशा अतीन्द्रियावबोधा जायन्ते—इति वेदान्तग्रन्थेषु वर्णितम् ।
जिजामाता—तादृशी ममान्तःकरणवृत्तिः । सुखदोऽयं समय इत्येव मे प्रतीतिः ।
शिवनृपः—बाढम् । न काऽपि बाधा सूचिता ।
( ततश्च हसति गिरिजा । जिजामातृपादौ च सुदृढमवलंबते )
शिवनृपः—अम्ब, महाभाग्यवती भवती । यतः किल परिणतप्रज्ञायाः सुलक्षणानीमानि—

धर्माचारः परिणमति वै चित्तशुद्धौ चिरेण
चित्तैकाग्र्यं सुफलमभिगम्यं महादेवभक्त्या ।
सूक्ष्मज्ञानं तदनु सुलभं स्वान्तरालोकनस्य
साक्षात्कारी भवति मनुजः सौख्यभाङ्मोक्षमार्गे ॥२३॥

जिजामाता--न जाने किमपि वेदान्तगतम् । वत्स, त्वयाऽऽकर्णितमिदं पण्डितेभ्यः सद्गुरुभ्यश्च । एतावदेवानुभवामि यत् स्थिरा सुखदा चान्तःकरणवृत्तिः संप्रति विशेषतश्चाद्य प्रभाते ।
शिवनृपः---यद्यद्घटते तत्तदनुभूयते प्रवाहपतितेन निरहंकारेण । समवृत्तिः सदासुखदायिनी । तथाहि—

द्वन्द्वं जगद्गुणयुतं प्रकृतिस्वरूपं
सौख्यं च दुःखमिह भोग्यमपक्रमेण ।
दुःखेषु नैव विमना मनुजो भवेद्वै
सौख्येषु नापि मनसा जयघोष इष्टः ॥२४॥

जिजामाता—हे वत्स, " विजयते रघुवीरः समर्थः " " विजयते रघुवीरः समर्थः" इति घोषणा दूराच्छ्रुतिपथमायाति। कच्चित्त्वयाऽपि श्रूयते तादृशो जयघोषः।

शिवनृपः—नहि, नहि।

जिजामाताः—सद्गुरुरामदासस्य जयघोषोऽयमिति त्वया कथितं वारंवारम्।

शिवनृपः—आम्। परं नाकर्ण्यते किमपि तादृशं मया। अयमपि भवत्या अतीन्द्रियानुभवः।

प्रतिहारः—(प्रविश्य) देव, मुंबापुर्याः संप्राप्तो दूतः। द्रष्टुमिच्छति चात्रभवन्तम्।

शिवनृपः—मंत्रिणे तं निवेदय प्रथमम्।

प्रतिहारः—मंत्रिणा परीक्षितोऽयं समनुयातश्चात्र।

शिवनृपः—सत्वरमुभौ प्रवेशय।

प्रतिहारः—यथाऽऽज्ञा। (निष्क्रामति प्रविशति चांग्लदुतमंत्रिभ्यां सहितः। तौ शिवनृपं जिजामातरं च प्रणमतः।)

शिवनृपः—किं प्रयोजनमागमनस्य।

मंत्री—देव, आंग्लाधिकारिणाऽयमुपहारः समर्पितः। (आंग्लदूतो मंजूषामुपस्थापयति)

शिवनृपः—भवतु। उपाधिं विना न किमपि ददत्यांग्लाः। किंस्वरूपा उपाधय उपक्षिप्यन्ते।

मंत्री—न काप्युपाधिर्निवेद्यतेऽनेन।

शिवनृपः—साधु। स्वीक्रियतामुपहारः प्रेष्यन्तां चास्मद्धन्यवादाः।

मंत्री—एवं करिष्यामि। (निष्क्रान्तो दूतेन सह)

जिजामाता—शुभशकुनोऽयम्। अलक्षितश्च लाभः।

शिवनृपः—अम्ब, धूर्ततमा आंग्लाः। कोऽपि दूरगामी हेतुर्भविष्यति तेषाम्।

जिजामाता—यद्भविष्यति तद्भवतु। सद्यस्कोऽनुग्रह इत्येव समाधानम्।

शिवनृपः—अत्यन्तं व्यवहारकुशला एते वैदेशिका योजनसहस्त्रमितं सागरविस्तारमुल्लंघ्य विचरन्ति विश्वस्मिन्। तथाहि—

आंग्ला व्याजविशारदा विभवसंपन्ना वणिग्वृत्तयो
राजन्ते खलु राजनीतिचतुरा आचारधारावराः।
उद्योगप्रियमानसा उदधिसंचारे सहोत्साहिका
विज्ञाने नवमार्गगे निरतनैपुण्यान्विता नागराः ॥२५॥

" विजयते रघुवीरः समर्थः "—" विजयते रघुवीरः समर्थः "—इति जयघोषः श्रूयते। ततः प्रविशति प्रतिहारः समर्थरामदासानुगतः।)

प्रतिहारः—इत इतो गुरुदेवः।

रामदासः—विजयते रघुवीरः समर्थः। विजयते रघुवीरः समर्थः।—

मनः सर्वभावाद्भजेः सत्यवाचं
मनः सर्वमिथ्या त्यजेः संविधानम् ।
मनः सत्यरूपो जगच्चालको वै
मनः सर्वनाशोऽस्ति मिथ्याविधाने ॥२६॥

विजयते रघुवीरः समर्थः । विजयते रघुवीरः समर्थः ।
ॐ भवति, भिक्षां देहि ।
( ततः शिवनृपः सुवर्णपात्रे "स्वराज्यलेखं" निधाय तत्सर्वं रामदासस्य भिक्षापुटे समर्पयति । पादयोः पतति च । )

रामदासः—शुभं भूयात्-शुभं भूयात् ।

( जिजामाता प्रणमति )

भगिनि, कच्चित्सुखदः सूक्ष्मावबोधः संजातः ।

जिजामाता—ओम्-सद्गुरो, ओम् ।

( शिवपत्नी प्रणमति )

रामदासः—शुभं भूयात्-शुभं भूयात् ।

शिवनृपः—भगवन्, इदमासनमलङ्क्रियताम् ।

रामदासः—तथा । परं न विहितं सुवर्णासनं संन्यासिनः ।

शिवनृपः—अखिलं स्वराज्यं गुरुदेवस्य । का वार्त्ता तर्हि सुवर्णासनस्य । तथाहि—

दानं स्वराज्यस्य समर्पितं वै
हस्ते गुरोः स्वान्तरबोधनेन ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥२७॥

रामदासः—( साश्चर्यं पत्रलेखं दृष्ट्वा ) भोः शिवभूप, न साधु मन्ये तवेदं चेष्टितम् । किं कुर्यामितेनोपाधिना । श्रूयताम्—

एकान्ते सुखमास्यते परतरे चेतः समाधीयते
पूर्णात्मा सुसमीक्ष्यते जगदिदं तद्बाधितं दृश्यते ।
देहाद्यं न तु भुज्यते प्रतिदिनं स्वाराज्यमासेव्यते
प्रारब्धं ह्यनुभूयते विधिवशाद् ब्रह्मात्मना स्थीयते ॥२८॥

एष दिनक्रमो मे । कथं निर्वर्त्येत स्वराज्यकार्यं विदेहवृत्या ।

जिजामाता—सद्गुरो, सर्वं भवच्चरणयोरर्पितम् । अधुना भवद्वचनं प्रमाणम् ।

शिवनृपः—भगवन्, क्षम्यतां स्पष्टोक्तिः ।

यदि भवति निवृत्तिः श्रेयसी युष्मदीया
किमिति न परिसेव्या सा मया मोक्षमार्गे ।
गुरुचरणमुपास्यं शिष्यवर्गेण नूनं
दिनकरमनुयान्ति क्षाम्यमाणा ग्रहाद्याः ॥२९॥

रामदासः—राजगृहं प्रविशन्ति नानालोका नानाद्वारैः । भोः शिवभूप, तथैव "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इति भगवद्वचनं सुप्रसिद्धम् । तदनुसारेण—

संन्यासमार्गमनुयामि निजस्वभावात्
क्षत्रस्य योगमनुतिष्ठतु शिष्यवीरः ।
श्रीरामकृष्णजनकादय उत्तमार्था
राजर्षिगौरवमयानथ राजयोगात् ॥३०॥

तस्मात् प्रत्यर्पयामि स्वराज्यमिदं भवद्धस्ते । संचालयतु च भवानेतदीश-निक्षेपरूपेण । (तथा करोति)

शिवनृपः—वाक्स्तंभो जातो मेऽनेन गुरुदेववचनेन ।

जिजामाता—पूर्वमेव मयोक्तं "सद्गुरुवचनं प्रमाणम्" इति ।

शिवनृपः—सद्गुरोरादेशात्करिष्यामि स्वराज्यव्यवहारम् । परं सद्गुरुस्वामित्वदर्शकं चिह्नमावश्यकं तस्य ।

जिजामाता—सद्गुरोः काषायवस्त्रं भवतु स्वराज्यकेतनम् । तच्च दर्शयिष्यति सद्गुरुस्वामित्वम् ।

शिवनृपः—ओम् । सम्यगुपन्यासः । काषायकेतुराकाशे समुत्क्षिपेत् । तेन च सोत्साहा जायेरन्नस्मद्योद्धारः ।

रामदासः—तथाऽस्तु । रामराज्यवद् भूयाद् हिंदवीस्वराज्यम् । अतोऽहं ब्रवीमि "सुमंगलदिनमिदम्" । यद्राजयोगे दीक्षितोऽद्य शिवभूपः । अन्ततः इद-मुच्यते मया—

भवेद्विजयवान्ध्वजोऽयमवनीतले भाग्यवान्
रमेत सुखसंपदासु जनता महाराष्ट्रजा ।
समागम इहानुमोदनमयः सवर्णान्वितः
शुभा च मतिरस्तु मानवमनस्सु सद्धार्मिकी ॥३१॥

सर्वे—विजयते रघुवीरः समर्थः । विजयते रघुवीरः समर्थः ।

— समाप्तम् —

# शुद्धिपत्रम्

| पान | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | १६ | कूर्चाणां | कूर्चानां |
| २ | १३ | साद्धाचार | साध्वाचार |
| ७ | २२ | निरीहवृत्त | निरीहवृत्ते |
| ११ | ५ | नवेदये | निवेदये |
| १५ | २७ | धुरिणां | बलिनां |
| १६ | ५–६ | श्रीसविता | श्रीसवितृ |
| १७ | २७ | प्रयतिष्यामः | प्रयतिष्यामहे |
| १८ | २२–२३ | शत निष्काणि | शतं निष्काणि |
| ,, | २७ | भवत्पन्थानः | भवतः पन्थानः |
| १९ | १७ | कारका | कारिका |
| २० | ९ | मुत्कर्ष्य | मुत्कृष्य |
| २१ | १८ | दुष्चरितं | दुश्चरितं |
| २८ | ४ | समाप्तोति | समाप्नोति |
| ३१ | ११ | भवत्पन्थानः | भवतः पन्थानः |
| ३२ | २२ | परिहासप्रियौ | परिहासप्रिये |
| ३३ | २३ | दिष्ठं | दिष्टं |
| ३८ | १७ | मन्मासि | मन्मनसि |
| ४२ | १४ | शयना | शयाना |
| ४३ | २२ | क्रुध्या | क्रुध्ये |
| ४६ | २४ | वाठाः | पाठाः |
| ,, | २५ | प्राविशतोः | प्रविशतो |
| ५३ | १४ | कच्चि | कच्चित् |
| ६० | ७ | भिल्लिणी | भिल्लिणि |
| ६१ | १४ | परिश्वजे | परिष्वजे |
| ६८ | १० | बिम्यति | बिभेति |
| ,, | २५ | कायाक्लेशः | कायक्लेशः |
| ७० | २६ | धुरिणो | मुखरा |
| ७४ | ११ | मस्तद्वा | मस्मद्वा |
| ७८ | ११ | चांग्लदुत | चांग्लदूत |
| ,, | १७ | काप्युपाधि | कोऽप्युपाधि |
| ८० | २६ | सुखसंपदासु | सुखसंपदीह |

# या ग्रंथकर्त्यांची इतर पुस्तकें

१. श्रीकृष्णरुक्मिणीयम् ।

(संस्कृत नाटक–छापत आहे)

२. भीमकीचकीयम् ।

(संस्कृत नाटक)

३. सौभद्रम्

(संस्कृत नाटक)

४. श्रीबालरामायणम् ।

५. श्रीबालभारतम् ।

६. श्रीबालभागवतम् ।

(ही तीन छोटीं पुस्तकें सोप्या संस्कृतांत लहान मुलांसाठीं लिहिलेली आहेत व हीं श्री. जोशी–लोखंडे पुणें, यांनीं प्रकाशिलीं आहेत.)

७. A New Approach to Sanskrit

(संस्कृत शिकविण्याच्या नव्या पद्धतीवर हें पुस्तक असून तें चित्रशाळा प्रेस, पुणें यानीं प्रकाशिलें आहे.)